व्याख्येयः । अतो नात्मज्ञानं मुख्यफलसाधकम् । आत्मलाभान्न परं विद्यते । "तरति शोकमात्मवित्" । "अथ योऽन्यां देवतामुपास्त" इत्यादिवाक्येषु आत्मशब्दो भगवद्वाचको, न जीववाचकः । अभेदोपासना च श्रूयते । न हि निन्द्यं निन्दितुं प्रवर्तत इति न्यायात् । "नाऽसोमयाजी संनयेदि"ति वाक्यात्, "एकत्वेन पृथक्त्वेने"ति भगवद्वाक्यात् । अतो मूलज्ञानं साधनं भवदपि, तावता न भवतीति प्रादुर्भावकरणात् प्रेमैव साधनमिति निश्चीयते ॥ २०७ ॥

---

टिप्पणी ।

तेष्वात्मपदं जीववाचकं किन्तु भगवद्वाचकमित्याहाऽऽत्मलाभादित्यारभ्य न जीववाचक इत्यन्तेन । अभेदोपासनेत्यारभ्य निश्चीयत इत्यन्ते । "अथ योऽन्यां देवतां" इत्यत्राभेदोपासना स्तूयते न तु भेदोपासना सर्वथा निन्द्यते । न हि निन्द्यमर्थं निन्दितुं वाक्यं प्रवर्ततेऽपि तु विधेयमर्थं स्तोतुम् । यथा "नाऽसोमयाजी संनयेदि"त्यत्र सोमयाजित्वं स्तोतुं वाक्यप्रवृत्तिः, नत्वसोमयाजित्वं सर्वथा निन्दितुं, सर्वथा निन्दया निषेधपरत्वे "नाऽसोमयाजी संनयेत्सनयेद्वे"ति सूत्रं विरुध्येत । "एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखमि"ति गीतायां भेदाऽभेदाभ्यामुपासनानिरूपणात् भगवज्ज्ञानमेव साधनं भजनार्थं, परन्तु साक्षात्कारोऽपेक्षणीय इति तदर्थं प्रेमापेक्षणीयमित्यर्थः ॥ २०७ ॥

आवरणभङ्गः ।

श्रुतीनां विरोध इत्यत आहु आत्मेत्यादि । तथा च तस्य प्रकरणविरुद्धत्वात्तथेति न विरोध इत्यर्थः । नन्वस्त्वात्मशब्दस्य भगवद्वाचकत्वं, तथापि भेदोपासननिन्दाश्रुतिबलाद् अभेदज्ञानाभावे भक्तेरपि निर्बलत्वमायातीति न शङ्कानिरास इत्यत आहुः अभेदेत्यादि । तथा च तस्याः श्रुतेर्भेदोपासनानिन्दायां तात्पर्याभावान्न भक्तेर्नैर्बल्यमित्यर्थः । एतद्विनिगमनाय दृष्टान्तमाहुः नेत्यादि । तथा च यथायं न नित्यानुवादः, "नाऽसोमयाजी सनयेत् सनयेद्वे"ति सूत्रात् । किन्तु विकल्पपर्यवसायी । तथा निन्दापि विकल्पपर्यवसायिनीत्यर्थः । ननु तत्र कल्पो यथा विकल्पगमकस्तथा नात्र गमकमिति भ्रमप्राप्तस्येयं निन्दा सती प्रसज्यप्रतिषेध एव पर्यवस्यत्विति चेन्नेत्याहुः एकत्वेत्यादि । तथा चैतद्वाक्यं ज्ञात्वा प्रवृत्तं प्रतीतिविकल्प एव पर्यवस्यतीति न तथेत्यर्थः । फलितमाहुः अत इत्यादि । तथा च ज्ञानस्य या साधनता सा नाभेदज्ञानत्वेन रूपेणापि तु साक्षात्कारत्वेन रूपेण । साक्षात्कारस्त्वाविर्भावाधीन, आविर्भावश्च, "यमेवैष" इति श्रुत्या वरणाधीनो, वरणं च भगवदधीनं, भगवाँश्च प्रेमाधीन इति प्रेमैव साधनम् । "केवलेन हि भावेने"ति वाक्यादिति भावः ॥ २०७ ॥

अन्येषामसाधनत्वे प्रमाणमाह—

यन्न योगेन सांख्येन दानव्रततपोऽध्वरैः ।
व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥ ३०८ ॥
तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ।
प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव च ॥ ३०९ ॥
मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।
याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयम् ॥ ३१० ॥
इत्येकादशसर्वस्वं भगवान् स्वयमुक्तवान् ।
आत्मानं हि स्वयं वेद तस्मादन्यवचो मृषा ॥ ३११ ॥

यन्न योगेनेति । वाक्यत्रयम् । सांख्यं ज्ञानशास्त्रम् । ननु विहितविनिषिद्धत्वाद्विकल्पो भवतु, न त्वसाधकतेत्याशङ्क्याह इत्येकादशसर्वस्वमिति । भगवानेव फलमिति । स चेत् स्वोपायं, तन्न भवतीति निषेधति तदाऽन्यवाक्यं मुधा । तुल्यबलत्वे हि विकल्पः । भगवतश्च फलत्वं भगवद्वाक्यादेवावसीयते । "मत्तः परतरं नान्यदि"-त्यादिभिः । तस्माज्ज्ञानादीनां न साधकत्वम् ॥ ३०८–३११ ॥

ननु वेदा अपि भगवद्वाक्यमेवेति श्रुतिस्मृतिविरोधे श्रुतिर्बलिष्ठेति कथं ज्ञानस्य साधकत्वं तत्राह—

कर्मयोगादयः सर्वे कृष्णोद्गमनहेतवः ।
उदासीनतयोद्भेदान्न हि सर्वात्मना फलम् ॥ ३१२ ॥
भक्तावत्यादरेणैव प्रकटो जायते हरिः ।
आत्मानं च ततो दद्यात् सुखे का परिदेवना ॥ ३१३ ॥
सहनं खननं गङ्गातीरस्थितिवदेव तत् ।
साङ्गो योगस्तथा भक्तिस्तत्र प्रेमातिसौख्यदम् ॥ ३१४ ॥

कर्मयोगादय इति । भगवान् स्ववाक्यसत्यत्वाय कर्मयोगादिष्वपि प्रकटो भवति, परं निरिन्धेन, यथा महान् लौकिकः । अत उदासीनतयोद्भेदात् सर्वथा मुख्यं फलं न प्रयच्छति । भक्तौ विशेषमाह भक्ताविति । सुखे स्वरूपानन्दे दृष्ट-

---

आवरणभङ्गः ।

अन्येषामित्यादि । ननु भवत्वेवं तथाप्यन्येषामसाधनत्वे किं मानमित्याशङ्कायां तदाहेत्यर्थः । विकल्पो भवत्विति । "अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाती"त्यादौ तथा निर्णयादित्यर्थः । इत्यादिभिरिति । मुक्तात् संदर्भरूपादिति शेषः ॥ ३०८–३११ ॥

न प्रयच्छतीति । तथा च प्रमाणविचारेण ज्ञानस्य साधकत्वेऽपि प्रमेयविचारेणासाधकत्वमेवेति तथोच्यत इति भावः । भक्तौ विशेषमाहेति । तर्हि भक्तौ कथं पूर्णं फलं दास्यतीत्या-

न्तेन तारतम्यं बोधयति सहनमिति। ज्ञानमार्गे दुःखे समागते तन्निवृत्तिः सहनप्राया। यथा तृषायां सहनम् उपायः। योगस्तु खननप्रायः। भक्तिस्तु गङ्गातीरस्थितिरूपा। दुःखनिवर्तकस्य प्रकटत्वात्। तत्रापि प्रेमसम्भवे गङ्गा स्वयमुद्यम्य पाययति। तथा भगवान् ॥ ३१२–३१४ ॥

ननु हीनभावं फलात्मा महान् कथं गच्छेत्। तत्राह—

पिता चरेद्यथा बाले सुखं भक्ते तथा हरिः।
प्रेम्णैव सर्वतोऽत्यर्थं गोपीनां कामदो यतः ॥ ३१५ ॥
अच्छिद्रसेवनाच्चैव निष्कामत्वात् स्वयोग्यतः।
द्रष्टुं शक्यो हरिः सर्वैर्नान्यथा तु कथञ्चन ॥ ३१६ ॥
दयया सर्वभूतेषु सन्तुष्ट्या येनकेनचित्।
सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः ॥ ३१७ ॥
शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः।
त एव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाम्बुजम् ॥ ३१८ ॥
अन्तर्बहिःसाधनयोः स्वरूपं परिकीर्तितम्।
प्रकारश्चाप्ययं प्रोक्तो दर्शनेनान्यथा तु तत् ॥ ३१९ ॥

पिता चरेदिति। स्नेहमार्गे हीनभावो न दोषाय। लौकिकपरमेतदिति न मन्तव्यम्। यतो भगवान् प्रेम्णा गोपीभ्यः अदेयमपि कामं दत्तवान्। न च लौकिकन्यायस्तत्र, पूर्णकामत्वात्। न हि स्वत इच्छारहितः कोऽप्येवं प्रयच्छति। ननु प्रेम दृष्टे भवति। सर्वथा अदृष्टे कथं प्रेमेत्याशङ्क्य दर्शनोपायमाह अच्छिद्रसेवनादिति। सेवनं स्वयोग्यानुसारेण। न त्वल्पं बहु वा प्रयोजकम्। तत्र बहिःसाधनमाह दययेति। विशेषोपायमाह शृण्वन्तीति। श्लोकत्रयस्यार्थमाह अन्तर्बहिरिति ॥ ३१५–३१९ ॥

---

आवरणभङ्गः।

काङ्क्षायां तत्र दासत्वेवेति हेतुपूर्वकमाहेत्यर्थः। अग्रिमं निगदव्याख्यातम् ॥ ३१२–३१४ ॥

हीनभावमिति। साधनभावम्। एतदिति। हीनभावाश्रयणम्। मूले, अच्छिद्रेत्यादि। निष्कामत्वात् स्वयोग्यतश्चाच्छिद्रसेवनादेवेति योजना। स्वयोग्यमकारं बोधयितुं स्वयोग्येति व्याकुर्वन्ति सेवनमित्यादि। बहुकरणे भगवति भारेणाल्पकरणे कापट्येन छिद्रसम्भवादित्यर्थः। तत्रेत्यादि। दर्शने बहिरङ्गं साधनमाहेत्यर्थः। दययेति वाक्यं चतुर्थस्कन्धसमाप्तौ नारदेनोक्तम्। विशेषोपायमिति। अत्राशुप्रसादमात्रस्योक्तत्वेनाशुदर्शनस्यानुक्तत्वात् तदर्थमाहेत्यर्थः। इदं वाक्यं प्रथमस्कन्धे कुन्तीस्तुतौ। अन्तरित्यादि। अन्तरङ्गबहिरङ्गयोः साधनयोरित्यर्थः। अत्राच्छिद्रसेवनरूपमन्तरङ्गं साधनं प्रथमे इति क्रमेण ज्ञेयम् ॥ ३१५–३१९ ॥

इतोऽप्युत्तमं दर्शनोपायमाह—

सर्वापेक्षापरित्यागात् पौरुषस्य सभाजनम् ।
आसक्त्या भगवद्भक्तैः परं दर्शनसाधनम् ॥ ३२० ॥
कपिलादिर्महायोगी पूर्वं येनोपलब्धवान् ।
तं प्रकारमिहोवाच पाक्षिकं तद्धि साधनम् ॥ ३२१ ॥
राजवत् कुत्रचित् कृष्णः कस्यचित् केनचित् फलम् ।
ददाति तावता नित्यं सर्वत्रेति न निश्चयः ॥ ३२२ ॥
प्रेम्णा सेवा तु सर्वत्र सेव्यवश्यत्वसाधनम् ।
किञ्चिद्भक्तियुतश्चेत् स्याद्योगादिः साधनं क्वचित् ॥ ३२३ ॥
सर्वं ब्रह्मात्मकं जानन् कर्म चाऽपि तथाऽऽचरन् ।
पञ्चकर्मविधानेन षोढाऽपि प्रकटः सदा ।
निर्बन्धेन फलत्येष न च भक्त्या यथा तथा ॥ ३२४ ॥

सर्वापेक्षेति । "येऽन्योऽन्यतो भगवतः प्रसज्ये"त्यत्र निरूपयिष्यते । ननु कपिलेन भगवदवतारेण निरूपितः कथं नोपायस्तत्राह कपिलादिरिति । न ज्ञायते भगवाँस्तत्र केन हेतुनिमित्तेन देवहूत्यै मुक्तिं दत्तवान् । परं लोके तत्साधनं प्रकटितवान् । पुष्टिमार्गप्रकारेषु तस्या अपि प्रवेशः । परं पाक्षिकं साधनम् । कथं पुष्टिमार्ग इत्याकाङ्क्षायां तन्निरूपयति राजवदिति । राजा कदाचिद्भार्यामपि सेवकेन मारयति । नैतावता सा महतामपि धृष्या भवति । तथा प्रेमापि भविष्यतीत्याशङ्क्याह प्रेम्णा सेवेति । लोके वेदे च प्रेम्णा सेवायां क्रियमाणायां सेव्यो वश्यो भवति, किञ्च, योगादीनां साध-

---

आवरणभङ्गः ।

इतोऽपीत्यादि । तृतीयस्कन्धानुसारेण साधनान्तरमाहेत्यर्थः । ये इत्यादि । अत्रापि, "मत्पादसेवाभिरता मदीहा" इति पूर्वार्धादस्मिन्नप्युपाये सेवानुसरिष्यतीति प्रतिभाति । कपिलादिरिति । महायोगी पूर्वं येनोपलब्धवान् तं प्रकारं कपिलादिरिहोवाचेति संबन्धः । अत्र गमकमाहुः न ज्ञायत इत्यादि । केन हेतुनिमित्तेनेति । अष्टभिरध्यायैर्मताष्टकमुक्त्वाग्रे मुक्तिकथनात् केन साधनेन केन प्रयोजनेनेत्यर्थः । प्रयोजनस्यापि प्रयोजकतया निमित्तत्वमविरुद्धम् । तस्या इति । मुक्तेरित्यर्थः । तथेत्यादि । राजभार्यावत् प्रेमापि साधनान्तराभिभाव्यं भविष्यति । तथा च तस्यापि पाक्षिकत्वमित्याशङ्क्येत्यर्थः । एतेन "तीर्थादावपि या मुक्तिरि"त्यादिनोक्ते युक्तिरुक्ता । सर्वत्रेत्यस्यार्थमाहुः लोके वेदे चेति । महावाक्ये माहात्म्यं प्रतिपाद्याऽभेदप्रतिपादनेन निरुपधिस्नेह एवाभिप्रायात् "भगवान् ब्रह्म कार्त्स्न्येन" इत्यत्रापि तथोक्तत्वाल्लोकेऽपि तथा दर्शनादिति न प्रेम्ण

न्तेन तारतम्यं बोधयति सहनमिति । ज्ञानमार्गे दुःखे समागते तन्निवृत्तिः सहनप्राया । यथा तृषायां सहनम् उपायः । योगस्तु खननप्रायः । भक्तिस्तु गङ्गातीरस्थितिरूपा । दुःखनिवर्तकस्य प्रकटत्वात् । तत्रापि प्रेमसम्भवे गङ्गा स्वयमुद्गम्य पाययति । तथा भगवान् ॥ ३१२–३१४ ॥

ननु हीनभावं फलात्मा महान् कथं गच्छेत् । तत्राह—

पिता चरेद्यथा बाले सुखं भक्ते तथा हरिः ।
प्रेम्णैव सर्वतोऽत्यर्थं गोपीनां कामदो यतः ॥ ३१५ ॥
अच्छिद्रसेवनाच्चैव निष्कामत्वात् स्वयोग्यतः ।
द्रष्टुं शक्यो हरिः सर्वैर्नान्यथा तु कथञ्चन ॥ ३१६ ॥
दयया सर्वभूतेषु सन्तुष्ट्या येनकेनचित् ।
सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः ॥ ३१७ ॥
शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः ।
त एव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाम्बुजम् ॥ ३१८ ॥
अन्तर्बहिःसाधनयोः स्वरूपं परिकीर्तितम् ।
प्रकारश्चाप्ययं प्रोक्तो दर्शनेनान्यथा तु तत् ॥ ३१९ ॥

पिता चरेदिति । स्नेहमार्गे हीनभावो न दोषाय । लौकिकपरमेतदिति न मन्तव्यम् । यतो भगवान् प्रेम्णा गोपीभ्यः अदेयमपि कामं दत्तवान् । न च लौकिकन्यायस्तत्र, पूर्णकामत्वात् । न हि स्वत इच्छारहितः कोऽप्येवं प्रयच्छति । ननु प्रेम दृष्टे भवति । सर्वथा अदृष्टे कथं प्रेमेत्याशङ्क्य दर्शनोपायमाह अच्छिद्रसेवनादिति । सेवनं स्वयोग्यानुसारेण । न त्वल्पं बहु वा प्रयोजकम् । तत्र बहिःसाधनमाह दययेति । विशेषोपायमाह शृण्वन्तीति । श्लोकत्रयस्यार्थमाह अन्तर्बहिरिति ॥ ३१५–३१९ ॥

---

आवरणभङ्गः ।

काङ्क्षायां तत्र दास्यत्येनेति हेतुपूर्वकमाहेत्यर्थः । अग्रिमं निगदव्याख्यातम् ॥ ३१२–३१४ ॥

हीनभावमिति । साधनभावम् । एतदिति । हीनभावाश्रयणम् । मूले, अच्छिद्रेत्यादि । निष्कामत्वात् स्वयोग्यतश्चाच्छिद्रसेवनादेवेति योजना । स्वयोग्यप्रकारं बोधयितुं स्वयोग्येति व्याकुर्वन्ति सेवनमित्यादि । बहुकरणे भगवति भारेणाल्पकरणे कापट्येन छिद्रसंभवादित्यर्थः । तत्रेत्यादि । दर्शने बहिरङ्गं साधनमाहेत्यर्थः । दययेति वाक्यं चतुर्थस्कन्धसमाप्तौ नारदेनोक्तम् । विशेषोपायमिति । अत्राशुप्रसादमात्रस्योक्तत्वेनाशुदर्शनस्याप्रुक्तत्वात् तदर्थमाहेत्यर्थः । इदं वाक्यं प्रथमस्कन्धे कुन्तीस्तुतौ । अन्तरित्यादि । अन्तरङ्गबहिरङ्गयोः साधनयोरित्यर्थः । अत्राच्छिद्रसेवनरूपमन्तरङ्गं साधनं प्रथमे इति क्रमेण ज्ञेयम् ॥ ३१५–३१९ ॥

इतोऽप्युत्तमं दर्शनोपायमाह—

सर्वापेक्षापरित्यागात् पौरुषस्य सभाजनम् ।
आसक्त्या भगवद्भक्तैः परं दर्शनसाधनम् ॥ ३२० ॥
कपिलादिर्महायोगी पूर्वं येनोपलब्धवान् ।
तं प्रकारमिहोवाच पाक्षिकं तद्धि साधनम् ॥ ३२१ ॥
राजवत् कुत्रचित् कृष्णः कस्यचित् केनचित् फलम् ।
ददाति तावता नित्यं सर्वत्रेति न निश्चयः ॥ ३२२ ॥
प्रेम्णा सेवा तु सर्वत्र सेव्यवश्यत्वसाधनम् ।
किञ्चिद्भक्तियुतश्चेत् स्याद्योगादिः साधनं क्वचित् ॥ ३२३ ॥
सर्वं ब्रह्मात्मकं जानन् कर्म चाऽपि तथाऽऽचरन् ।
पञ्चकर्मविधानेन षोढाऽपि प्रकटः सदा ।
निर्बन्धेन फलस्यैष न च भक्त्या यथा तथा ॥ ३२४ ॥

सर्वापेक्षेति । "येऽन्योऽन्यतो भगवतः प्रसज्ये"त्यत्र निरूपयिष्यते। ननु कपिलेन भगवदवतारेण निरूपितः कथं नोपायस्तत्राह कपिलादिरिति । न ज्ञायते भगवाँस्तत्र केन हेतुनिमित्तेन देवहूत्यै मुक्तिं दत्तवान् । परं लोके तत्साधनं प्रकटितवान् । पुष्टिमार्गप्रकारेषु तस्या अपि प्रवेशः । परं पाक्षिकं साधनम् । कथं पुष्टिमार्ग इत्याकाङ्क्षायां तन्निरूपयति राजवदिति । राजा कदाचिद्भार्यामपि सेवकेन मारयति । नैतावता सा महतामपि धृष्या भवति । तथा प्रेमापि भविष्यतीत्याशङ्क्याह प्रेम्णा सेवेति । लोके वेदे च प्रेम्णा सेवायां क्रियमाणायां सेव्यो वश्यो भवति, किञ्च, योगादीनां साध-

आवरणभङ्गः ।

इतोऽपीत्यादि । तृतीयस्कन्धानुसारेण साधनान्तरमाहेत्यर्थः । ये इत्यादि । अत्रापि, "मत्पादसेवाभिरता मदीहा" इति पूर्वार्धादस्मिन्नप्युपाये सेवानुसन्धास्यतीति प्रतिभाति । कपिलादिरिति । महायोगी पूर्वं येनोपलब्धवान् तं प्रकारं कपिलादिरिहोवाचेति संबन्धः । अत्र गमकमाहुः न ज्ञायत इत्यादि । केन हेतुनिमित्तेनेति । अष्टभिरध्यायैर्मताष्टकमुक्त्वाग्रे मुक्तिकथनात् केन साधनेन केन प्रयोजनेनेत्यर्थः । प्रयोजनस्यापि प्रयोजकतया निमित्तत्वमविरुद्धम् । तस्या इति । मुक्तेरित्यर्थः । तथेत्यादि । राजभार्यावत् प्रेमापि साधनान्तराभिभाव्यं भविष्यति । तथा च तस्यापि पाक्षिकत्वमित्याशङ्क्येत्यर्थः । एतेन "तीर्थादावपि या मुक्तिरि"त्यादिनोक्ते मुक्तिरुक्ता । सर्वत्रेत्यस्यार्थमाहुः लोके वेदे चेति । महावाक्ये माहात्म्यं प्रतिपाद्याऽभेदप्रतिपादनेन निरुपधिस्नेह एवाभिप्रायात् "भगवान् ब्रह्म कार्त्स्न्येन" इत्यत्रापि तथोक्तत्वाल्लोकेऽपि तथा दर्शनादिति न प्रेम्णि

कत्वं च प्रेमसम्बन्धात् । सम्पूर्णेन वेदमार्गेणाप्येतन्न भवतीति वक्तुं काण्डद्वयार्थमनुवदति सर्वं ब्रह्मात्मकमिति । तथापि निर्बन्धेनैव फलति । वाक्यानुरोधात् । लोकोऽत्र नियामकः ॥ ३२०-३२४ ॥

षट्पदार्थषोडशपदार्थज्ञानान्निःश्रेयसाऽधिगम इत्यादिन्यायवाक्यानां का गतिरित्याह—

कणादादिमुनिश्रेष्ठाः शुक्रमोहितबुद्धयः ।
वृथाशास्त्रकलापं हि जगुस्तेन न चान्यथा ॥ ३२५ ॥

कणादादिमुनिश्रेष्ठा इति । दैत्यानामर्थे शुक्रेण ऋषयो विमोहिताः । मोहदशायां च शास्त्राणि कृतवन्तः । अतो वेदविरुद्धत्वाद् भ्रान्तकृतत्वाच्च न तानि प्रमाणानि ॥ ३२५ ॥

एवं सर्वं निरूप्य प्रेमभक्तिमार्गमुपसंहरति—

प्रेम्णोऽन्यत् साधनं लोके नास्ति मुख्यं परं महत् ।
श्रीभागवतमेवात्र परं तस्य हि साधनम् ॥ ३२६ ॥
अधिकारमभिप्रायं ज्ञात्वा भक्तमुखेन हि ।
सकृच्छ्रवणमात्रेण कृष्णे प्रेम भवेद् ध्रुवम् ॥ ३२७ ॥
विरक्तो विपरीतादिभावनारहितः सुहृत् ।
लीलामात्रश्रुतौ तस्य भवेत् प्रेमाऽखिले किमु ॥ ३२८ ॥
श्रीभागवततत्त्वार्थमतो वक्ष्ये सुनिश्चितम् ।
यज्ज्ञानात् परमा प्रीतिः कृष्णे शीघ्रं फलिष्यति ॥ ३२९ ॥

प्रेम्णोऽन्यदिति । रुच्यादिना जातं प्रेम दोषदर्शनान्निवर्तते । दोषश्च शास्त्राभावे लोकदृष्ट्या भवति । अतः श्रीभागवतमेव सर्वशास्त्राऽर्थनिर्धारकं सर्वमाहात्म्यज्ञापकं प्रेमोत्पादकं भवति । "यस्यां वै श्रूयमाणायामिति", "लोकस्याजानत" इति वाक्यात् । तत्र

आवरणभङ्गः ।

पाक्षिकत्वशङ्केति भाव । प्रेमसंबन्धादिति । केचित् स्वदेहान्तरित्यादौ द्वितीयस्कन्धे तथा निर्णयाचथेत्यर्थ । लोक इत्यादि । स्ववाक्यानुरोधे क्रियमाणे लोकप्रवाहः कर्मयोगादयः सर्वे इत्यत्रोक्तरीत्या नियामक इत्यर्थः ॥ ३२०-३२४ ॥

इत्याहेति । इत्याकाङ्क्षायामाहेत्यर्थः । दैत्यानामर्थ इति । दैत्यानां हितार्थे । तदिदं शुकमोहितत्वं पुराणान्तरादवधेयम् । पद्मपुराणे तेषां शिवकृतमोहकथनात्तेषु प्रकारान्तरेऽपि मोहितत्वानपायात् । तदुक्तमधस्तात् ॥ ३२५ ॥

यदि प्रेमैव साधनं तर्हि लौकिकप्रबन्धादिभ्योऽन्यतोऽपि या तद्भविष्यति । श्रीभागवतोक्तरीतौ किमित्याग्रह इत्याकाङ्क्षायां पूर्वोक्तं स्मारयितुमाहुः रुच्यादिनेत्यादि । व्यभिचारमाशङ्क्य परिहर्तुमाहुः तत्रेत्यादि । अत्र तात्पर्यज्ञानस्याङ्गता, "तम्माद्भारते"त्यत्रोक्ता । भक्तमुखाच्छ्रवणस्य शुक-

लोके श्रीभागवतश्रोतॄणां प्रेमाभावं दृष्ट्वा न श्रवणं साधनमित्याशङ्क्य विशेषमाह अधिकारमिति । श्रवणस्याङ्गत्रयं—भागवतस्य सम्यक्तात्पर्यज्ञानं, भक्तमुखाच्छ्रवणं, श्रोतुश्च वैराग्यमिति । एतदभावे न फलतीत्यर्थः । इतोऽप्युत्तमाधिकारे भागवतैकदेशेनापि भक्तिर्भवतीति कैमुतिकन्यायेनाह विरक्त इति । सर्वथा लोकेषु विरक्तः, भागवतोक्ते असंभावनाविपरीतभावनारहितः । तीर्थादिना शुद्धान्तःकरणो विदुरतुल्यः । ततोऽप्यधिको वा उद्धवतुल्यः । तस्य लीलामात्रश्रुतावपि भक्तिर्भवति । अतो मुख्याधिकारे संपन्ने भागवतश्रवणे भक्तौ न कोऽपि संदेहः नन्वेवं सति भवतः कोपयोगः, तत्राह **श्रीभागवततत्त्वार्थमिति** । भागवतार्थे अज्ञाते, अन्यथाज्ञाते च भक्तिर्न भवतीति । अधिकारेऽपि जाते फलं न भविष्यतीति मयोपायः क्रियते, तत्त्वार्थो विविच्योच्यते । यस्मिन् ज्ञाते सर्वथा भक्तिर्भवत्येव । नापि जाता भक्तिस्तूष्णीं तिष्ठति ।

---

आवरणभङ्गः ।

सूतादिवक्तृनिरूपणात् सिद्ध्यति । वैराग्यस्य च राजशौनकादिभ्यः शेषं निगदव्याख्यातमिति शुभम् । अत्रैतद् बोध्यम् । उत्तरतन्त्रे साधनाध्यायप्रथमपादे रहत्यधिकरणमारभ्याऽन्तं पूर्वजन्मशुद्धिपितृशुद्धिविचारपूर्वकं ज्ञानाधिकारिणः शरीरनिष्पत्तिर्विचारिता । तादृशशरीरनिष्पत्तिरिदानीं दुर्घटा । अन्नाद्यशुद्ध्या तपोऽभावेन वेदानां यातयामतया च रेतःसिग्योन्योः शुद्ध्यभावात् । तथा द्वितीयपादे मुक्तियोग्यतां विचार्य ज्ञानविषयो य उभयलिङ्गाद्यधिकरणैर्विचारितस्तदवधारणमपि पूर्वोक्तदेहादिकं विना दुर्लभम् । न चेदमप्रयोजकम् । प्रथमपादेन तथाऽवधारणात् । अन्यथा द्वितीयेऽध्याये नामरूपव्याकर्तृत्वादिविचारोत्तरमेवोभयलिङ्गाद्यधिकरणानि भगवान् व्यासो वदेत् । अतो न पूर्वोक्तयोग्यतां विना विद्योदयः । तदेतदुक्तं, "सत्ये युगेति महतां भवत्येतन्न चाऽन्यथे"ति, "न शब्दात् सुविचारितादि"ति च । तथा तृतीयतुरीयपादयोरन्तरङ्गबहिरङ्गसाधनं विचारितम् । तेन विद्योदयेऽपि स्वभावे सर्वात्मना नाऽस्त्यन्तरायः । तदेतदुक्तं, स्वपो ज्ञानरूपं चेत्यादि । एवं सति, "तत्त्वमस्यादि"वाक्योक्ताभेदज्ञानमात्रे शास्त्रस्य न पर्यवसानं, किन्तु साधनान्तरे । तच्च भक्तिरूपमेव, नेतरदिति गीतैकादशस्कन्धस्थभगवद्वाक्यैरेवावसीयते । अतः सूत्राणामपि तत्रैव तात्पर्यम् । तदेव *लिङ्गभूयस्त्वाद्यधिकरणेषूपपादितम्* । तदेतदुक्तम्—इदमेवेत्यारभ्याऽन्यवचो मृषेत्यन्तेन । किञ्च, पूर्वाध्यायद्वये सर्वसामर्थ्यवत्त्वं भगवतः स्थापयित्वा मतान्तराणि चापाकृत्य तृतीये यत् साधनं वैदिकं विचारितं तेन वैदिकसाधनादेव मुक्तिर्नेतरैः स्मार्तैः । वैदिके च कालादिवैगुण्यात् कुण्ठे तन्निरपेक्षा गीताश्रीभागवतयोरुक्ता भक्तिरेव साधनमिति जिज्ञासाशास्त्रादिप्रणयनोत्तरं श्रीभागवतकारणादवसीयते । इदं च प्रथमस्कन्ध एव स्फुटम् । ततश्च जिज्ञासाशास्त्रस्याप्येतदनुरोधित्वमेव । तदेतत् सर्वं तृतीयस्य तुरीयपादे उपपादितम् । आस्तिकसूत्रे उक्तं च, "भक्तिमार्गप्रचारैकहृदयो बादरायणः । मानं भागवतं तत्र तेनैवं ज्ञेयमुत्तमैरि"ति ।

वादृशी भविष्यति या लतावत् प्रत्यहं वृद्धिमायान्ती शीघ्रं कृष्णाख्यं फलं फलिष्यति। अतो भक्तीच्छोर्या सर्वथैतदनुसंधेयमिति ग्रन्थारम्भः समर्थितः ॥ ३२६–३२९ ॥

इति श्रीमद्वल्लभाचार्यविरचिते श्रीभागवततत्त्वदीपे सर्वनिर्णयकथनं नाम द्वितीयं प्रकरणम् ॥

---

आवरणभङ्गः।

तदिदमुक्तं कर्मयोगादय इत्यारभ्य, न च भक्त्या यथा तथेत्यन्तम् । एवमत्रोत्तरमीमांसानिर्णयोद्धारप्रतिज्ञा पूरिता । अतः परमेका प्रतिज्ञाऽवशिष्यते । गुणानामपि त्रैविध्ये हेतुरग्रे वक्तव्य इति । सा श्रीभागवतार्थनिबन्धे पूरणीयेति सर्वं निष्कलङ्कमिति शुभम् ॥३२६–३२९॥

स्निग्धं सितं रसघनं हृदयं स्वकीयं वक्तुं निजेषु नवनीतमयं दधानः ॥
प्रेङ्खस्थितोऽतितरले जनमानसेऽपि द्यासे दयालुरिति तस्य गुणं व्यनक्ति ॥ १ ॥
यस्तस्य पूर्णः करुणाकटाक्षे पूर्णोऽभवत् सर्वविनिर्णयेऽपि ॥
अत्यर्थगम्भीरविशुद्धतत्त्वदीपप्रकाशाऽऽवरणस्य भङ्गः ॥ २ ॥

इति श्रीमद्वल्लभाऽऽचार्यचरणनखचन्द्रचन्द्रिकानिरस्तहार्दतमसस्तदासदासस्य गोस्वामिश्रीपीताम्बरसुतस्य पुरुषोत्तमस्य कृतौ तत्त्वदीपप्रकाशावरणभङ्गे सर्वनिर्णयप्रकरणं द्वितीयं संपूर्णम् ॥ २ ॥



श्रीकृष्णार्पणमस्तु.




# NOTES.

## TATTVA DIP NIBANDHA.

Verse 1 From this portion commences the part entitled 'Sarva Niranaya' Prakash of the Tattva Dip Nibandh. The first part was meant for the advanced souls. For their knowledge, God's form and His relation to the human souls and the universe was explained at great length. But ordinary men whose reasoning faculty is not much developed, and others who are dull-headed can not comprehend the problem discussed in the first part. So for the benefit of these mediocre-headed and the dull-headed persons, the author undertakes the compiliation of the second part. Here he tries to interpret the real meaning of all the scriptures accepted by the Hindoos. First of all he begins with the Vedas. The entire body of the Vedic literature consists of two parts, the first one is called the Purva Kanda and the second one, the Uttar Kanda. The Purva Kanda describes the sacrifice-aspect of God and the Uttarakanda, the knowledge-aspect. According to Vallabhacharya, work (sacrifice), knowledge and love are the forms of God. Of these, the sacrifice-aspect is dealt with in the Purva Kanda and the knowledge-aspect in the Uttar Kanda. Some interpreters of the Vedas, perceive contradiction between the Purva Kanda and the Uttar Kanda, but Vallabhacharya says that each one of these reveals a particular aspect of one and the same God. If there is any difference, it is only in their aspects and not in the form of God. God is one and the same. In the Purva Kanda, He is revealed in the form of sacrifice and in the Uttar Kanda in the form of 'Knowledge'. So these two parts of the Vedas are not opposite in nature.

God's sacrificial form is the subject in the opening section of this work. In the first verse, the author according to his usual practice, offers salutation to Lord Krishna who is none, but Brahman. In his sacrificial form, this God is five-formed biformed or multi-formed.

The five forms of sacrificial God are enumerated here. They are the Agnihotra, the Darsha-purnamas, the Pashu, the Chaturmasyas, and the Soma. Of these the Agnihotra is to be performed daily, the Darshapurnamas monthly, the Pashu six-monthly and the Soma annually. The Chaturmasya sacrifices are independent. These sacrifices are not only the means for the attainment of God's devotion but they are the very form of God. It is not as the Sadhanas (means) that the various sacrifices mentioned above have got any value, but in their being one with God. This important point should be clearly borne in mind, by every reader of this work. If Vallabhacharya's interpretation of the Vedas has got any real meaning, it is in this.

Verse 3. Not only the sacrifice itself constitutes the form of God, but all the various kinds of sacrifices with their auxiliaries constitute the form of God. The means for the sacrifice are of two kinds—1 the Prayajas etc. & 2 the Ladels etc. Anything that is instrumental in the realisation of fruit is called a means.

The five forms enumerated above are also designated as Prakriti. They have all to be done compulsorily strictly in accordance with the injunctions of the Vedas. Not even the slightest departure from these injunctions is to be tolerated. In other words, it is not left to the option of the man, as to how much of the ceremony of a particular sacrifice he will perform and how much he will omit. Such option is strictly prohibited. The sacrifice has to be performed in every detail in accordance with the scriptural text. If the sacrifice is performed strictly, in accordance with the injunctions of the vedas, the performer is sure to get the fruit. If he fails to do so, then not that he will not get the fruit, but on the contrary he will incur some sin, for the absolution of which he shall have to undergo some expiation-ceremony, enjoined in the scriptures. The sacrifices, which are to be performed optionally are called the Vikriti. The Prakriti sacrifices are also called the Nityakarmas and the Vikriti, the Kamya Karmas. The fruit of the sacrifice as stated here is heaven, as the fruit of knowledge is emancipation.

Verses 5-7. Svarga is of two kinds:—1 आत्मसुखरूप and the 2 स्वर्गलोक. The Svarga of the mediocre souls is the bliss of soul. It is spiritual heaven. *The dull-headed who perform sacrifices go to the* world of heaven. The word Svarga is here employed in double senses. In this verse the first kind of Svarga is explained. It is defined as that state which is dissociated from misery, and which is not subject to time and which is obtained by the sheer wish of the person. It can not be the heavenly world, since in that Indra etc. are not free from pain. If any one says that the word 'Svarga' must mean ब्रह्मलोक and not आत्मसुख, the author here says *that no, it does not mean that. In the author's opinion, the* spiritual Svarga referred to above, cannot be ब्रह्मलोक, since the latter is perishable. It must be therefore, आत्मसुखरूप. Here it is employed in the sense of spiritual state.

Hence the author defines the word Svarga as सत्त्वगुणोदय. It is a condition marked by the rise of the spiritual virtue (Sattva).

Verses 8-9. Again the doubt against taking the word स्वर्ग in the sense of आत्मसुख is raised here, and answered by the author. The ordinary meaning of स्वर्ग as heaven is not wrong. It is also intended by the Vedas. *But that* स्वर्ग *is attained by the* मन्दाधिकारी. *The* स्वर्ग *of the spiritual souls* (मध्यमाधिकारी's) *consists of* आत्मसुख. Thus both the meanings are possible.

*Verses* 10-12. Of the five sacrifices enumerated above, the Agnihotra, the Darshapurnamasas, and the Jyotistom have Svarga for their fruit. This fruit is of temporary character. The fruit of the remaining two i. e. of the Pashu and the Chaturmasyas is permanent. The fruits of the Chaturmasyas are inexhaustible good deeds and that of the Pashu sacrifice is the conquest of the whole world.

Verses 13-14. The Nitya Yajna and Kamya Yajna are the *forms of God. The former brings only limited fruit* As it is obligatory for all householders, the omission of it will be an impediment in the part of the soul's progress. The latter

The five forms of sacrificial God are enumerated here. They are the Agnihotra, the Darsha-purnamas, the Pashu, the Chaturmasyas, and the Soma. Of these the Agnihotra is to be performed daily, the Darshapurnamas monthly, the Pashu six-monthly and the Soma annually. The Chaturmasya sacrifices are independent. These sacrifices are not only the means for the attainment of God's devotion but they are the very form of God. It is not as the Sadhanas (means) that the various sacrifices mentioned above have got any value, but in their being one with God. This important point should be clearly borne in mind, by every reader of this work. If Vallabhacharya's interpretation of the Vedas has got any real meaning, it is in this.

Verse 3. Not only the sacrifice itself constitutes the form of God, but all the various kinds of sacrifices with their auxiliaries constitute the form of God. The means for the sacrifice are of two kinds:—1 the Prayajas etc. & 2 the Ladels etc. Anything that is instrumental in the realisation of fruit is called a means.

The five forms enumerated above are also designated as Prakriti. They have all to be done compulsorily strictly in accordance with the injunctions of the Vedas. Not even the slightest departure from these injunctions is to be tolerated. In other words, it is not left to the option of the man, as to how much of the ceremony of a particular sacrifice he will perform and how much he will omit. Such option is strictly prohibited. The sacrifice has to be performed in every detail in accordance with the scriptural text. If the sacrifice is performed strictly, in accordance with the injunctions of the vedas, the performer is sure to get the fruit. If he fails to do so, then not that he will not get the fruit, but on the contrary he will incur some sin, for the absolution of which he shall have to undergo some expiation-ceremony, enjoined in the scriptures. The sacrifices, which are to be performed optionally are called the Vikriti. The Prakriti sacrifices are also called the Nityakarmas and the Vikriti, the Kamya Karmas. The fruit of the sacrifice as stated here is heaven, as the fruit of knowledge is emancipation.

Verses 5-7. Svarga is of two kinds :—1 आत्मसुखरूप and the 2 स्वर्गलोक. The Svarga *of the mediocre souls is the bliss of soul. It is* spiritual heaven. The dull-headed who perform sacrifices go to the world of heaven. The word Svarga is here employed in double senses. In this verse the first kind of Svarga is explained. It is defined as that state which is dissociated from misery, and which is *not subject to time and which is obtained by the sheer wish* of the person. It can not be the heavenly world, since in that Indra etc. are not free from pain. If any one says that the word 'Svarga' must mean ब्रह्मलोक and not आत्मसुख, the author here says that no, it does not mean that. In the author's opinion, the spiritual Svarga *referred to* above, *cannot* be ब्रह्मलोक, *since the latter* is perishable. It must be therefore, आत्मसुखरूप. Here it is employed in the sense of spiritual state.

Hence the author defines the word Svarga as सत्त्वगुणोदय: It is a condition marked by the rise of the spiritual virtue (Sattva).

Verses 8-9. *Again the doubt against taking the word* स्वर्ग in the sense of आत्मसुख is raised here, and answered by the author. The ordinary meaning of स्वर्ग as heaven is not wrong. It is also intended by the Vedas. But that स्वर्ग is attained by the मन्दाधिकारी. The स्वर्ग of the spiritual souls (मध्यमाधिकारी's) consists of आत्मसुख. Thus both the meanings are possible.

*Verses 10-12. Of the five sacrifices enumerated above, the* Agnihotra, the Darshapurnamasas, and the *Jyotistom have Svarga for* their fruit. This fruit is of temporary character. The fruit of the remaining two i. e. of the Pashu and the Chaturmasyas is permanent. The fruits of the Chaturmasyas are inexhaustible good deeds and that of the Pashu sacrifice is the conquest of the whole world.

Verses 13-14. The Nitya Yajna and Kamya Yajna *are the forms of God. The former brings only limited fruit As it is* obligatory for all householders, the omission of it will be an impediment in the part of the soul's progress. The latter

i. e. Kamya or Vikriti Yajna is not obligatory. It is optional. Those who desire some fruit must perform it. The Vikriti Yajna is not a rival of the Prakriti Yajna but a great helper of it.

Verse 16. Of the four पुरुषार्थ० two are chief–सुखं (काम) (स्वर्गादि) and the absence of सुख i. e. दुःखाभावः (मोक्षः). धर्म is a means of both these. As this is obtained by अर्थ, it is also a means. In this verse, the author speaks about the Summum Bonum of human life. The Karmas should be done with a specific purpose of the realisation of fruits. These Karmas are of two kinds—the Kamya Karmas (desired, perishable), and Nitya Karmas (Eternal). The fruit of the former is perishable, that of the latter is permanent.

Verses 17–18. According to the Vedas, God is both the means and an end. If that is realised, all the ends of human pursuits will be accomplished.

Verses 19–20. Souls are of three kinds—Godly, human and demoniac. The goal of the first kind is immortality, that of the second kind *the worldly life and that of the third kind* Hell. These souls interpret the Vedas, in their own way, according to their nature. To prevent confusion arising from their misinterpretation, the author here makes an attempt to interpret it in the right manner.

Some persons not understanding the real spirit of the Vedas, say, that they teach only 'Karma'-work. They therefore resort to work as a means of attaining supreme bliss.

Verse 22. The author here says that no doubt, the sacrifices are also capable of yielding fruit, because they are done ultimately for the propitiation of God, and also they themselves are the aspect of God, yet they cannot give permanent fruit. The performance of works leads to re-birth. If re-birth is not desired, then men should pursue knowledge. The author here speaks of two paths—one, the path of flame (light) and the other of smoke. The path of smoke leads to 'Re-birth', *the path of flame to emancipation.*

The path of flame is to be understood here as the path of knowledge and that of the smoke as the path of work.

Verses 24-30. In the Vedas, various kinds of sacrifices with various ritualistic details have been described. But they all come under the head of 'Work'. It is through sheer ignorance that men of present times say that the Vedas teach different kinds of works. The fourfold division of the Vedas does not imply four different Vedas. The Vedas are one. and composite. Really speaking, the entire body of the Vedic literature is composed of two sections-The Purva Kanda and the Utter Kanda (the latter portion). The Purva Kānda deals with work-aspect of God. The Work-aspect of God is called Sacrifice (Yajna). And the knowledge-aspect is called Brahman. These two aspects are complementary of each other and not antagonistic. Vallabhacharya here seeks reconciliation between these two sections of apparently opposite natures. Jaimini laid emphasis on the work-aspect only and Vyas on the knowledge-aspect in their respective Bhashyas. From what these two eminent authorities have said about the meaning of the Vedas, one might be led to believe that their interpretations are at poles asunder and therfore like two irreconcilable things their differences cannot be bridged over. But Vallabhacharya does not take that view. He has suggested here the line of reconciling them.

Verses 31-32. The form of Sacrifice-God is described here. Just as a human being has hands, feet, the head etc., this form of God i. e. Sacrifice God has also all these. The Darsha Purnamas are his hands, the Pashu and the Chaturmasyas, the feet, and the Soma the middle part and the Brahman the head. With this verse ends the interpretation of the Vedas.

Verse 33. From this verse the author undertakes the interpretation of what is known as the Smritis. The task of interpreting the teaching of the Smritis is not so easy as that of the Vedas, because of conflicting teaching of divergent Smriti works. First of all the author defines the term 'Smriti'. It is

as he says, the reflection in black and white of the opinions and the practices of the Rishis, with regard to certain matters. In other words, the Smriti reflects the opinions of the Rishis of ancient times. The opinions of the Rishis, with regard to certain religious rites or social usages are expressed in the Smritis.

Just as the home etc. help the growth of the body, so also the Smriti literature helps the growth of the Dharma. This being so it is but proper that the Smritis should have their say on those matters that are partially touched in the Vedas. In the opinion of our author, both the Shrutis and the Smritis should be considered, if we want to learn the real truth about Dharma.

Verses 36–37. Five-fold nature of Dharma according to the Smritis is explained here. They are 16 संस्कार's such as गर्भाधान etc. सन्ध्योपासना etc. नित्यश्राद्धादि कर्म's, पाकयज्ञादि and प्रायश्चित्त.

Verses 38–39. Other topics treated in the Smritis are enumerated in these two stanzas.

Verses 40–41. Purification of the objects, is also one of the problems that has engrossed the attention of the Smritikārs. Our author considers that problem here. The purification is to be had in six different ways, in accordance with the six agencies that have their influence on these objects. The six influencing agencies are the place, the time, the materials, the doer, the hymn (मन्त्र) and the action. All these must be pure; otherwise the performance of sacrifice will prove futile i. e. the place where the sacrifice is to be performed, the time at which it is to be performed, the materials with which they are to be performed, the performer of the sacrifice and the ceremonies—all these must be pure.

Verse 42. Here the question is whether the Kalpasutras which treat of sacrifice should be classed as the Vedas or as the Smritis? As their authorship is attributed to certain Rishis, they ought to be classed as the Smritis. But our author says, they should be included in the Vedas as well as in

the Smritis because their principal subject is identical with that of the Vedas. On the other hand, as they lack the system of accentuation etc., and because of their being compositions of the Rishis, they should be regarded as the Smritis. The social usages in each province are not the same. Although the social problem in each province was the same, its treatment differed in accordance with the conditions of that province. There was no unanimity among the thinkers in their views about one and the same problem. Hence, in accordance with the social surroundings of the people of each province, the need for a separate Smriti treating of the problems of these people arose. This fact accounts for the multiplicity of the Smriti works.

Verse 43. संवादे i. e. in *conformity of the Smritis*. The objectors doubt that as the Vedas contain teachings similar to those of the Smritis, there is no need of a separate attempt for the exposition of the meaning of the Smritis. The author's answer is that the Vedic teachings are restricted in their scope. They are not of a generic nature. They are applicable only to limited cases; whereas the teachings of the Smritis have their value in their comprehensiveness.

Verses 44-45. The question here is whether certain Karmas known as the Grihya Karmas should be considered as Vedic or not. The answer is, they are not Vedic. The Agnihotras are of two kinds-the Vaidic as well as the Smarta (coming under the purview of the Smritis). When the question arises, whether at a particular time, the Vaidic Agnihotra should be performed or the Smarta then the answer is that the Vaidic is to be perferred to the Smarta.

Verse 46. The relation between the Vaidic teaching and the Smarta teaching is explained on the analogy of the object and its reflection in the mirror. Just as the mirror reflects the real object, similarly the Smritis expound the teaching of the Vedas. But just as the reflection is not the same as the object itself,

as he says, the reflection in black and white of the opinions and the practices of the Rishis, with regard to certain matters. In other words, the Smriti reflects the opinions of the Rishis of ancient times. The opinions of the Rishis, with regard to certain religious rites or social usages are expressed in the Smritis.

Just as the home etc. help the growth of the body, so also the Smriti literature helps the growth of the Dharma. This being so it *is but proper that the Smritis should have their say* on those matters that are partially touched in the Vedas. In the opinion of our author, both the Shrutis and the Smritis should be considered, if we want to learn the real truth about Dharma.

Verses 36–37. *Five-fold nature of Dharma according to* the Smritis is explained here. They are 16 संस्कार's such as गर्भाधान etc. सन्ध्योपासना etc. नित्यश्राद्धादि कर्म's, पाकयज्ञादि and प्रायश्चित्त.

Verses 38–39. Other topics treated in the Smritis are enumerated in these two stanzas.

Verses 40–41. Purification of the objects, is also one of the problems that has engrossed the attention of the Smritikārs. Our author considers that problem here. The purification is to be had in six different ways, in accordance with the six agencies that have their influence on these objects. The six influencing agencies are the place, the time, the materials, the doer, the hymn (मन्त्र) and the action. All these must be pure; otherwise the performance of sacrifice will prove futile i. e. the place where the sacrifice is to be performed, the time at which it is to be performed, the materials with which they are to be performed, the performer of the sacrifice and the ceremonies—all these must be pure.

Verse 42. Here the question is whether the Kalpasutras which treat of sacrifice should be classed as the Vedas or as the Smritis? As their authorship is attributed to certain Rishis, they ought to be classed as the Smritis. But our author says, they should be included in the Vedas as well as in

the Smritis because their principal subject is identical with that of the Vedas. On the other hand, as they lack the system of accentuation etc., and because of their being compositions of the Rishis, they should be regarded as the Smritis. The social usages in each province are not the same. Although the social problem in each province was the same, its treatment differed in accordance with the conditions of that province. There was no unanimity among the thinkers in their views about one and the same problem. Hence, in accordance with the social surroundings of the people of each province, the need for a separate Smriti treating of the problems of these people; arose. This fact accounts for the multiplicity of the Smriti works.

Verse 43. संवादे i. e. in conformity of the Smritis. The objectors doubt that as the Vedas contain teachings similar to those of the Smritis, there is no need of a separate attempt for the exposition of the meaning of the Smritis. The author's answer is that the Vedic teachings are restricted in their scope. They are not of a generic nature. They are applicable only to limited cases; whereas the teachings of the Smritis have their value in their comprehensiveness.

Verses 44-45. The question here is whether certain Karmas known as the Grihya Karmas should be considered as Vedic or not. The answer is, they are not Vedic. The Agnihotras are of two kinds-the Vaidic as well as the Smarta (coming under the purview of the Smritis). When the question arises, whether at a particular time, the Vaidic Agnihotra should be performed or the Smarta then the answer is that the Vaidic is to be perferred to the Smarta.

Verse 46. The relation between the Vaidic teaching and the Smarta teaching is explained on the analogy of the object and its reflection in the mirror. Just as the mirror reflects the real object, similarly the Smritis expound the teaching of the Vedas. But just as the reflection is not the same as the object itself,

in the same way, the teaching of the Smritis is not the same as that of the Vedas. So knowledge of the Vedas is essential for the knowledge of the Smritis. The teaching of the Smritis is intended to enlarge and strengthen the teaching of the Vedas. It is not intended to replace it. In other words, the Smriti literature is like a superstructure resting upon the foundation of the Vedas.

Verse 47. The Smritis also contain a section on the knowledge of Brahman. This should really be the province of the Upanishad part of the Vedas. So it should not find place in the Smriti works. But our author says it is not out of place *here*. It has its due place here. It is introduced here to facilitate the process of the acquisition of knowledge, which has been taught in the Upanishads. This is one way of explanation. The other explanation is that the knowledge section of the Smritis is derived from the Puranas. *Here ends the section on the Smritis.*

Verse 48. Verses from 48 to 71 form the Purāna Prakaran. In these verses, the author explains the usefulness of the Purans for the knowledge of Brahman. The position of the Purans, should not be deemed as inferior to that of the Vedas. In the Chhandogya Upanishad, the Puranas are *said to* be *the fifth* Veda. Like the Smritis, the Puranas also further corroborate the teaching of the Vedas. They make crude and incomprehensible matters discussed in the Vedas, intelligible and clear. So the man fortified with the knowledge of the Puranas, will not find it difficult to comprehend the meaning of the Vedas. To him the Vedas will not be a jungle of "Impenetrable mazes and complexities". The knowledge of the Puranas is essential for the clear and thorough understanding, of the Vedas.

Verse 49. The Vedas and the Smritis are the eyes, but the Puranas are the heart of Dharma. The knowledge of the Vedas and the Smritis should be supplemented by the knowledge of the Puranas, otherwise that knowledge will not be thorough.

Verse 50. The multifarious nature of the Puranas is here hinted. Just as the Vedic literature has many branches in accordance

with the various schools of thought, prevailing in Vedic times, so also there are many divisions of the Puranas The subjects of the Puranas are also many But they all ultimately point out to the knowledge of God So their various divisions are not to be considered as different but as constituting one body of literature. Although there are many Puranas and each differing from another in the treatment of its subjects still they are homogeneous in character

Verse 51 In all there are 18 Puranas Their classification is attempted here on the principle of the three qualities Sattva, Rajas and Tamas In some Puranas, there is predominance of the Sattva, in some that of the Rajas and in some that of the Tamas

Verse 52 A man on reading the account of the genesis given in each Purana, is likely to be puzzled at its diversity No one account of one Purana will agree with that of the other. The reason is that, each Purana treats the subject of genesis from its own stand point Some describe the creation in the Tamas age, some in the Rajas age and some in the Satvic age The creation in the first is due to Shiva, in the second to Brahma and in the third to Vishnu As these creations are evolved from different deities, it is but natural that the particulars about these creations should vary.

Verse 55. Although these Puranas differ from each other, in the matter of the details, about creation, they agree with each other in one respect i e about the fruit of Emancipation. This fruit is realisable by all those who seek it, irrespective of their caste, creed or colour. It is possible only through devotion of God. This teaching is common in all the Puranas. This proves the universality of the Puranas among the scriptures

In all, there are 18 Puranas of which the Kaurma, the Lainga, the Shaiva, the Skanda and the Agneya are the Tamas Puranas. The Vaishnava, the Narada, the Bhagavat, the Garuda, the Padma and the Varaha are the Sattvic Puranas. The Brahmand, the Brahman Vaivarta, the Markandeya, the Bhavishaya, the Vaman,

and the Brahman are the Rajas Puranas. The first six describe the glory of Shiva, the middle six that of Vishnu and the last six that of Brahman. These three deities, whose glory and greatness these 18 Puranas extol, are according to Vallabhacharyȧ, *the forms* of Krishna. So ultimately the meaning of all these Puranas is the deification of Lord Krishna or God.

Here the question might be raised–why should there be such triple divisions of the Puranas? *The answer is given by our author* in the latter half of verse 54. There, it is said that as there are three kinds of the Jivas (souls)—the Sattvic, the Rajas, and the Tamas, there are three types of the Puranas. The Sattvic Puranas are meant for the Sattvic souls, the Rajas for the Rajas souls, and the Tamas for the Tamas souls. The God of the Sattvic souls is Vishnu, therefore they would resort to the Sattvic Puranas, that of the Rajas is Brahma, therefore they would resort to the Rajas Puranas. Similarly the God of the Tamas souls being Shiva, the worshippers of Shiva would resort to the Tamas Puranas.

No doubt each one of these Puranas, preaches Moksha (freedom from worldly state as its fruit). But from that it should not be understood that even the Tamas and the Rajas Puranas will yield the Moksha as fruit. The *realisation of the* Moksha is possible through condition freed from the influence of the qualities. So it is when a devotee reaches this state, he becomes fit for the Moksha. It is like this. If we tell a child 'If you drink milk your hair will grow long'. The child acts up to our advice. But he does not grow the hair at once. However, if he follows this advice for a long period he will grow his hair long.

In the same way Tamas soul, by acting according as he is advised in the Tamas Puranas, will rise to the level of the Rajas, then by further process, will rise to the level of the Satvic. Thus, by pursuing the course of conduct *preached by the Puranas*, he will be, one day, purified and be immune from the influence of three qualities. Then he will become fit for the fruit of Moksha.

Verse 57. The object of the compiliation of the Puranas is here explained. It preaches universal Dharma not excluding the women and the depressed class people, who are strictly forbidden by the Vedas and the Smritis from the performance of the religious rites etc.

Verse 58. The universe is here compared with a tree. A tree every year puts forth new blossoms-fruits and flowers. In the universe also we have not evey year the same order. Every year there are some new changes. This being the case, our conception of Dharma must be in confirmity with the spirit of each time. To teach the truth of religion in new circumstances, the compiliation of the Gita and the Bhagavat was deemed necessary.

Verse 60. The question here considered is—why should Vyas have compiled the Bhagavat? He should have been satisfied with the compiliation of the Mahabharat. If the religious truth preached by the Bhagavat is the same as that preached by the Gita, then the latter being included under the Bharat, the labour of Vyas is unnecessarily wasted and so it is irrelevant. Our author says—no, the labour is not wasted. The compiliation of the Bhagavat was quite necessary. It was necessitated by the changed conditions of the times. Moreover, mere knowledge of the Gita is useless without love for God. It is parrot-like and therefore useless. *Vyas realised this fact. So he was not satisfied with his works* which preached only the knowledge of God, and not the love of God. It was from that consideration that he undertook this work i. e. The Bhagavat. ईशवाक्यं–the Gita. The object of the Bhagvāt, as stated here, is to give knowledge to God's votaries about the form of God, and show them the right way to reach God.

Verse 63. Another object of the compiliation of the Bhagavat is to make clear, the religious truth, which was latent (hidden from all) in the Vedas and therefore incomprehensible. The Vedas no doubt preached 'sacrifice' and also the 'knowledge' of Brahman,

but this is not the real truth preached by them. The real truth is the love of God. But this was not made manifest on the surface. So, ordinary readers of the Vedas could not catch this truth from the perusal and study of the Vedas. To lay bare that latent meaning in explicit terms, the attempt for the compiliation of the Bhagavat is made by its author. In other words, as unfolded in this stanza, the object is to preach love of God. It can be learnt only from the Bhagavat, and from none else–not even from the Vedas.

Verse 64. The Bhagavat does not contain only the revelation of truth of the Vedas, but it is a further exposition by Vyas, of the truth taught by the Lord. It is said that originally the Bhagavat consisted of 4 verses in which religious truth was imparted by the Lord himself to Brahma, who enlarged it in three chapters and handed over to Narad, who made further amplification and told Vyas to enlarge it. So, Vyas finally enlarged its size.

Verse 65. Here these questions are asked. 'How is it that the Bhagavat is included in the list of the Puranas? Why should it not have separate place of recognition like the Narada Panch Ratra? The author answers all these questions here. Although its authorship is attributed to Nārayan, its rank must be superior to that of the Narad Panch Ratra. The Narad Panch Ratra is included in the list of the Tāntric literature, which is inferior in the estimation of the people to the Puranas. As the Puranas rank higher than the Tantric works, the Bhagavat Purana does not belong to the cycle of the Tantric Literature. This is the first reason for its inclusion in the Puranas. The second reason is that the Narad Panch Ratra has for its object, the preaching of worship, whereas the Bhagavat, the love or devotion of God. The third reason is that like other Puranas, the Bhagavat treats of the ten objects such as creation etc. On account of these three reasons the Bhagavat differs from the Narad Panch Ratra.

Verse 66. Although the Bhagvat contains the essence of the truth preached by the Vedas, still it has its place superior to the

स्कन्धसमाप्तिस्थस्य पुराणसङ्ख्यासम्भूतिमित्यादिना ब्राह्मादिपुराणसङ्ख्यागणनावसरे दशाष्टौ श्रीभागवतमित्यस्य गणनस्य "एवं पुराणसन्दोहश्चतुर्लक्ष उदाहृतः । तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते । इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कज" इत्यत्र तत्रेति सप्तम्या इदमश्च विरोधापातात्, तस्मिन्नेव स्कन्धे सप्तमाध्याये "सर्गोऽस्याथे"त्यादिनोक्तस्य महापुराणसामान्य-लक्षणस्य द्वितीयस्कन्धस्य "अत्र सर्गो विसर्गश्चे"त्यस्य श्रीभागवतलक्षणस्य च विचारे प्रतीय-मानस्य सामान्यविशेषभावस्य बाधप्रसक्तया तद्विरोधापत्तेश्च । न च "द्वापरे समनुप्राप्ते" इत्यादि-प्रथमस्कन्धस्य सन्दर्भविरोधः । "जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतम् । कृतवान् भारतं यत्त्वं सर्वार्थपरिबृंहितम् । जिज्ञासितमधीतं च यत्तद्ब्रह्मसनातनम् । तथापि शोचस्यात्मानमकृतार्थ इव प्रभो" इति नारदोक्तौ भारतकरणाद्ब्रह्मजिज्ञासाध्ययनानामेवोक्तत्वादनुवादके "अस्त्येव मे सर्वमिदं त्वयोक्तमिति"वाक्येऽपि तेषामेव परामर्शेनाष्टादशधाकरणस्य श्रीभागवतपूर्वभावित्वात्तेः ।

एवं च द्वादशस्कन्धेऽस्य पञ्चमत्वेन गणनाच्चत्वारि पुराणानि भारतं च कृत्वाऽपरितुष्टो नारदोपदेशेनेदं चकार । ततः परितुष्टोऽन्येषामधिकारिणामर्थे तत्तद्योग्यान्यन्यानि चकारेति ज्ञायते । एतेनैवेतिहासपुराणानामिति बहुत्वस्योपपत्तौ बाधान्तराणामपि निरासेऽतिरेककल्पनं भागवतान्तरस्योच्छेदकल्पनादिकं च प्रतिपाद्य विरोधादिप्रासादुप्रेक्ष्यमिति सुधीभिरवधेयम् ।

प्रकृतमनुसरामः । अतः पुराणेषु कालत्रयस्य सङ्कलीकृत्य कथनात्पुराणभारतयोः पूर्वा-परभावस्याविवक्षितत्वात्पुस्तकान्तरेषु अष्टादशपुराणानां कर्तेति पाठदर्शनाच्च नाष्टादशबहिर्भावोऽस्ये-त्यष्टादशान्तर्गतत्वमेव श्रीभागवतस्य बुद्धिमद्भिरनुसन्धेयमिति शुभम् ॥

तत्त्वदीपप्रकाशेन यः पन्था दृष्टिगोचरः ।
कृतस्तेन पथाऽस्मामी रक्षा शङ्का निरकृता ॥

इतिश्रीमद्वल्लभाचार्यचरणनलिनाज्ज्ञातोत्तमाङ्गश्रीपीताम्बरतनुजपुरु-
षोत्तमकृतावतारवादावल्यां श्रीभागवतस्वरूपविषयक-
शङ्कानिरासवादस्त्रयोदशः समाप्तः ॥

# श्रीमद्भागवतप्रमाणभास्करः ।

श्रीमद्वल्लभचरणान्नत्वा विलिखामि संशयच्छेदम् ।
निखिलप्रमाणमूर्द्धनि भागवते सन्दिहानानाम् ॥ १ ॥

ननु केचन भ्रान्ताः भागवतं पौरुषेयमेव वदन्ति । केचन देवीपुराणं कालिकापुराणं वा । उभयत्र भागवतप्रयोगात् । भगवत्या इदं भागवमिति देवीपुराणे प्रथमश्लोक एव प्रयुक्तत्वात् । 'यदिदं कालिकाख्यं तु मूलं भागवतं विदुरि'ति कालिकापुराणे च भागवतपदप्रयोगात् । तथैव 'पराशरोक्तमपरं तथा भागवतद्वयमि'ति कूर्मपुराणवचनाच्च । किञ्च, पुराणदानप्रस्तावे मत्स्यपुराणेऽपि भागवतदानस्य हेमसिंहसमन्वितत्वमुक्तं तेनापि देवीपुराणमेव तदित्यवगम्यते । अन्यथा सिंहसमन्वितत्वं न वदेयुः ।

किञ्च, श्रीधरस्वामिनाऽपि ससंशयमेवोक्तं भागवतं नाम नान्यदिति शङ्कनीयमिति । अथ च प्राचीननिबन्धकारैरपि प्रमाणत्वेन कुत्रापि न लिखितानि भागवतपद्यानीत्येतैर्हेतुभिस्तथात्वं निश्चीयत इति चेत्—

उच्यते । अहो निखिलपुराणादिप्रमाणगणदिनकरनिकरकिरणप्रकाशेऽपि महामोहान्धकारावृतचेतसामलक्ष्यत्वम् । तथाहि— न हि भागवतनिर्णयो लौकिकयुक्त्या भवति केनचित्पौरुषेयमित्युक्तेन तस्य पौरुषेयत्वम् । उपपुराण(लक्षण)कथनेन यथा तत्तत्पुराणनिर्णयस्तथा श्रीभागवतस्यापि पुराणोक्तलक्षणैरेव निर्णयः कर्त्तुं शक्यो नान्यथा । तथा च प्रथमं मत्स्यपुराणे सकलपुराणानां लक्षणकथनपूर्वकमुपस्करसहितं दानमुक्तम् । तत्र भागवतस्यापि दानकथने—

'यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमुच्यते ।
लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।
प्रोष्ठपद्यां पौर्णमास्यां स याति परमं पदमि'त्युक्तम् ।

न हि पौरुषेयत्वे तादृक् दातृफलं सम्भवति ।

नारदीयेऽपि,

'तुलसीकाननं विष्णोर्यथा प्रियतमं बहु ।
पुराणं च शुकप्रोक्तं तथा तुलसिचन्दनमि'ति ।

पाद्मे च

'अम्बरीषशुकप्रोक्तं नित्यं भागवतं शृणु ।
पठस्व स्वमुखेनापि यदीच्छसि भवक्षयमि'ति ।

---

१ कोऽस्य कर्तेति न ज्ञायते । १ भागवतपदेति गुच्छते ।

स्कन्धपुराणे च ब्रह्माणं प्रति भगवद्वाक्यम्—

'सम्भविष्यामि कल्पस सत्यवत्यां पराशरात् ।
वेदार्थं चैव वक्ष्यामि सर्वेषां हितकाम्यया ॥
ब्रह्मसूत्रं करिष्यामि सर्वश्रुत्यर्थसिद्धये ।
दर्शयिष्यामि वेदार्थं भारतव्यपदेशतः ॥
वेदशाखासु नष्टासु वेदार्थो भारते कलौ ।
दृश्यते नात्र सन्देहः कर्तव्यः केनचित्क्वचित् ॥
भारते भगवद्गीता श्रुत्यर्थे संशयापहा ।
श्रुतिकल्पतरोः साक्षात्फलं भागवतं विदुः ।
गीतार्थाद्विस्तरेणाहं वक्ष्यामि च विशेषतः ।
तेन रूपेण वेदार्थं यद्वक्ष्यामि तथैव तत् ॥
तयोर्न मन्यते मूढः स पाषण्डी नराधमः ॥
भविष्यति कलौ सृष्टिरासुरी ब्राह्मणेष्वपि ।
ते हि वक्ष्यन्ति वेदार्थमन्यथा हि यथेच्छया ।
कृष्णद्वैपायनाख्यो हि सम्भविष्यामि सर्वथा ॥
इत्युक्त्वाऽजं स भगवांस्तत्रैवान्तरधीयते'त्युक्तम् ।

अत एव व्यासचरणैरपि श्रुतिकल्पतरुफलरूपत्वेनैवोपक्रमितं 'निगमकल्पतरोरि'त्यत्र । एवं चैतावत्प्रमाणोत्कृष्टधर्मवत्त्वं श्रीभागवतस्यैवोक्तं न तु देवीपुराणादौ क्वचिद्दृष्टं श्रुतं वा । तादृशे श्रीभागवते पौरुषेयत्वं देवीपुराणत्वं वा वक्तुं कथं तव जिह्वा चलति । चलने वा छिन्ना सती कथं न पतति ।

अन्यच्च हरिवंशेऽप्युक्तम्,

पुराणास्ते पुराणेषु ऋषयः सम्प्रचक्षते ।
श्रूयते चास्य चरितं वेदेष्वपि पुरातनम् ॥
महापुराणात्प्रभृति परं तस्य न विद्यते ।
यथास्य देवदेवस्य चरितं सप्रभावजमि'ति ।

अस्यार्थस्तु—पुराणाः प्राचीनाः ऋषयः । तं भगवन्तं लोकवेदप्रसिद्धं पुराणेषु सम्यक् प्रचक्षते । अथ च वेदेष्वपि अस्य चरितं पुरातनं श्रूयते । तथापि महापुराणाच्छ्रीभागवतात्परमुत्कृष्टं कुत्रापि न विद्यते । तत्र हेतुः प्रभृतीति । सृष्टिक्रममारभ्य । अथवा, महापुराणात्प्रभृति महापुराणमारभ्यैव प्रारम्भात्समाप्तिपर्यन्तं साक्षाद्भगवच्चरित्रमेव सर्वेण तन्यत् अन्यत्र खण्डशो निरूपणं महापुराणे सामस्त्येन साधनफलसहितं यादृशं भगवत्स्वरूपं श्रुत्युक्तं वर्तते तादृशमेवोक्तमिति भावः । अत एव सर्वपुराणानां मध्ये श्रीभागवतं तु महापुराणम्, दशलक्षणयुक्तत्वात् । सामान्यतः पुराणं,

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥" इत्युक्तम् ।

इदं तु 'अत्र सर्गो विसर्गश्चे'त्यादिदशलक्षणयुक्तत्वान्महापुराणमित्युच्यते । लक्षणोत्कर्षेण धर्मोत्कर्षेण च महत्त्वम्, तदत्रोभयमपीति युक्तमेव महापुराणत्वम् । एतेनापि देवीपुराणपौरुषेयत्वादिशङ्का निरस्ता लक्षणाऽप्रवेशात् । न च पुराणस्य पञ्चलक्षणत्वस्यैव नियमादस्य तु दशलक्षणत्वात्कथमष्टादशपुराणान्तर्गतत्वमिति वाच्यम् । अधिकं तत्रानुप्रविष्टमिति न्यायात्पूर्वं पञ्च लक्षणानि सिद्धान्येव, पञ्चाधिकानि जातानीति तदुत्कर्ष एव सिद्ध इति महापुराणत्वं सिद्धम् । पुराणत्वं तु स्वतः सिद्धमेवाधिकलक्षणेन परं महत्त्वं सम्पन्नमिति समस्तपुराणेभ्योऽप्यधिकोत्कर्षो निरूपितः । एवं सति सुष्ठूक्तं महापुराणप्रभृतीति ।

एवं सति पुराणात्वं, पुराणेष्वित्यत्र—समित्युपसर्ग उक्त इति न सङ्गच्छत इति चेत्, न; ते ऋषयस्तु जीवास्तत्तत्कल्पानुसारि भगवच्चरित्रं स्वज्ञानानुसारेण सम्यगेव कथयन्ति, महापुराणकथनं तु भगवता साक्षात्समाधौ लीलासहितं स्वस्वरूपमनुभाव्य स्वस्वरूपेणैव कृष्णद्वैपायनेन कारितमिति तदुत्कर्षः सर्वाधिको निरूपित इति सर्वमनवद्यम् ।

किञ्च, अष्टादशपुराणान्तर्गतत्वं पुराणे सिद्धं नतु कल्पितं येनाऽन्यथा भवेत् । तथाहि वाराहपुराणे—

'ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
तथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥
आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा ।
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं तथा ॥
वाराहं द्वादशं प्रोक्तं स्कान्दं चात्र त्रयोदशम् ।
चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम् ॥
मात्स्यं च गारुडं चैव ब्रह्माण्डमष्टादशं तथे'ति ॥

मत्स्यपुराणे च सूतवचनम्—

'पुराणानि दशाष्टौ च साम्प्रतं तदिहोच्यते ।
नामतस्तानि वक्ष्यामि शृणुध्वमृषिसत्तमाः ॥
ब्रह्मणाभिहितं पूर्वं यावन्मात्रं मरीचये ।
ब्राह्मं तद्दशसाहस्रं पुराणं परिकीर्तितमि'त्यारभ्य ब्रह्माण्डपुराणपर्यन्तं,
'राजसूयसहस्रस्य फलमाप्नोति मानवः ।
हेमधेन्वा युतं तत्र ब्रह्मलोकफलप्रदमि'त्यनेन ।

तत्र मध्ये 'यत्राधिकृत्य गायत्रीमि'त्युक्तलक्षणसहिता भागवतगणना कृतेति, तदन्तःपातित्वं सिद्धमेवेति भावः ।

२ त॰दी॰नि॰परि.

विष्णुपुराणे च—

'ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥
तथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ।
आग्नेयमष्टमं चैव भविष्यं नवमं स्मृतम् ।
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम् ।
वाराहं द्वादशं चैव स्कान्दं चात्र त्रयोदशम् ।
चतुर्दशं वामनकं कौर्मं पञ्चदशं तथा ।
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परमि'ति ।

ननु भागवतस्य महत्त्वं ग्रन्थाधिक्यादेव कथितं भवेदिति चेत्, न; हन्तेदानीमेव निर्णीतमप्यर्थं नानुसन्धत्से । तथाहि—

"पुराणास्तं पुराणेषु पुराणं यं प्रचक्षते" इत्युपक्रम्य,
"महापुराणात्प्रभृति परं तस्य न विद्यते ।
तथास्य देवदेवस्य चरितं स्वप्रभावजम् ।"

इत्युक्तत्वाद्भगवत्प्रभावस्यैव महत्त्वे कारणत्वं नान्यस्येति सर्वमवदातम् ।

अन्यच्च, पठत एकस्य न्यूनाधिकभावेनैव महत्त्वोक्तौ समस्तपुराणेष्वव्यवस्था स्यात् । यत्रैव ग्रन्थाधिक्यं तत्रैव महत्त्वं पर्यवस्यतीति । अत एव साक्षाद्भगवता यदा समाधौ सर्वं ज्ञापितं तदा, तदनुभूय व्यासचरणैर्निरूपितमिति भगवत्सम्बन्धेनैव महत्त्वं नान्यजन्यमिति सर्वं सुस्थम् ।

किञ्च, यथा पुराणानां स्वाधिष्ठातृदेवसम्बन्धित्वेन नाम प्रसिद्धं 'ब्राह्मं पाद्मं वैष्णवं चे'त्यादि, तथा भागवतस्यापि भगवत्सम्बन्धित्वेनैव तथात्वमित्यलं विस्तरेण ।

यत्र पुराणदानप्रस्तावे सिंहसमन्वितत्वेन दानकथनादेवीपुराणत्वमुच्यते । तत्रापि शृणु । निर्णयः प्रकरणानुसारी कर्तव्यः । न भोजनसमये सैन्धवमानयेत्युक्तेऽश्वानयनमुच्यते । किन्तु लवणमेव । तथा च मत्स्यपुराणे समस्तपुराणानां दानं कथितम्, तत्र यथा, समस्तपुराणानां तत्तदुपस्करसहितं दानं कथितम्, तथा भागवतस्यापि हेमसिंहसमन्वितं दानमुक्तम् । नैतावता सिंहपदमात्रेण देवीपुराणत्वं वक्तुं शक्यम् । यतः पूर्वं 'यत्राधिकृत्य गायत्रीमि'त्युक्तलक्षणकथनेन निश्चयं कृत्वाऽग्रे दानमुक्तम् । तथा सति सिंहपदस्यान्य एवाऽभिप्रायः । तथाहि— हेम्नः सिंहा यत्र चतुर्ष्वपि पादेषु तादृशं सिंहासनं, तेन समन्वितम् । एतेन तत्र श्रीभागवतपुस्तकं प्रतिष्ठाप्य पूजां कृत्वा दानं कुर्यादिति विधिर्निर्दिष्ट इति भावः ।

नन्वास्तामन्यत् । श्रीधरस्वामिना ससंशयमुक्तं 'भागवतं नाम नान्यदि'ति । तत्राप्युच्यते । अहो निखिलपुराणादिप्रमाणशार्दूलनिकरभयात्पलायितस्य बालमृगस्येव तव स्वगतिरपि विस्मृता, यतस्तृणगुल्मपार्श्वमवलम्बितुमिच्छसि । रे मूढ श्रीधरस्वामिभिरपि त्वादृशानामेव मुखमर्दनार्थं निःसन्दिग्धतया तथोक्तम् । नहि वेदानां प्रामाण्यविचारोपक्रमेणैवाऽप्रामाण्यं भवति । तदा तु मीमांसकाः समस्तवेदोच्छेदका एव भवेयुः । यथेदानीं भ्रमस्तथा तत्समयेऽपि कलिकालजनितमहामोहविहिनासुरावेशभ्रान्तानां बहूनां भविष्यतीति तेषां निःसन्दिग्धत्वज्ञापनाय प्रमाणपूर्वकं तथोक्तमिति सर्वमवदातम् ।

यच्चोक्तम्, प्राचीननिबन्धेषु श्रीभागवतवचनानि नोपलभ्यन्ते तत्राप्युच्यते । एतावत्कुतर्कैः साक्षाद्भगवति पूर्णे ब्रह्मणि द्वेषपरिवेष्टितैव बुद्धिर्विदिता भवति । यतो वैकुण्ठादागतस्य साक्षान्नारायणमुखाद्ब्रह्मणा प्राप्तस्य, ततोऽपि नारदादिभिः परम्परया भुव्यागतस्य भागवतस्य यथाकथञ्चित् पौरुषेयत्वं साधनीयम् । तत्त्वेवमलौकिकपदार्थस्य लौकिकत्वं भवति । शृणु, निबन्धेषु वचनानि न सन्तीत्येतावन्मात्रेण भागवतस्य लौकिकत्वं वदसि । तत्र तावद्विचारय निबन्धेषु केषां धर्माणां विचारः कृतो वर्तते । यदि वदसि प्रवृत्तिधर्माणाम् । नहि भागवते प्रवृत्तिधर्माः, किन्तु निवृत्तिधर्माः । तत्रापि परमधर्मा इति न तद्वचनविषयास्ते निबन्धा इति न लिखितानीति, नैतावता तथात्वं भवितुमर्हति । पूर्वमेवाऽनेकप्रमाणेन सिद्धत्वात् । किञ्च, निबन्धेष्वपि सन्ति वचनानि । तत्र प्रथममखिलप्रमाणमूर्धनि हेमाद्रौ व्रतखण्डारम्भे,

'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।

इति भारतमाख्यानं कृपया मुनिना कृतमि'ति प्रथमस्कन्धीयपद्यमुदाहृतम् ।

तथा च प्रतापमार्तण्डेऽपि भक्तिप्रसङ्गे । अन्येष्वपि निबन्धेषु वैष्णवनिबन्धेषु च बहूनि सन्तीति किमतोऽधिकं वाच्यम् ।

नन्वेवं प्रमाणैः श्रीभागवतस्य महापुराणत्वमदलौकिकत्वमष्टादशपुराणान्तर्गतत्वं च साधितम् । परन्तु,

'अष्टादशपुराणानि कृत्वा सत्यवतीसुतः ।

भारताख्यानमखिलं चक्रे तदुपबृंहितम्' ॥

इत्युक्त्याऽष्टादशपुराणाऽनन्तरं भारतं कृतमिति निरूपितम् । भागवते तु भारतानन्तरं चित्ताशुद्धौ नारदोपदेशे समाधावनुभूय भागवतं कृतमित्युक्तम् । एवं सति भारतानन्तरकरणेऽष्टादशपुराणमध्यपातित्वं न सम्भवति, तन्मध्यपातित्वे तदनन्तरकृतिर्न सम्भवतीति चेत्? उच्यते, श्रीभागवतमनेकरूपेण भूमौ प्रकटम् । प्रथमं नारायणमुखात्प्रकटं सूक्ष्मभूतम् । ततो ब्रह्ममुखात्सूक्ष्ममेव । ततो नारदद्वारा । एवं परम्पराप्राप्तं तत्तत्कल्पेषु । तत्रान्यकल्पेषु व्यासोऽपि जीव एव । भगवच्चरित्राण्यपि तत्तत्कल्पानुसारीणि विभूतिरूपाण्येव । व्यासोऽपि स्वाधिकारानुसार्येव श्रीभागवतं निरूपितवान् । भगवतः स्वरूपाज्ञापनात् । अत एवाग्रे मनसो न प्रसादः । यदा पुनर्भगवान्साक्षात्स्वयं पूर्णस्वरूपाविर्भावं कृत्वा भक्तानामानन्ददानार्थं सारस्वतकल्पीयां लीलां कृतवान् तच्चरित्रात्मकं श्रीभागवतं प्रकटयितुकामः साक्षात्स्वरूपात्मकः कृष्णद्वैपायनो व्यासः स्वयमेव प्रकटीबभूव । ततः पुनः समाधौ सर्वं स्वचरित्रं ज्ञापितवांस्तदा । पुनरिदानीं व्यासचरणैर्विस्तरेण निरूपितम् । पूर्वं यथा भारतकरणेऽपि गीतार्थो न स्फुटो जातः यदा पुनः,

'अपश्यत्पुरुषं पूर्णं मायां च तदुपाश्रयाम् ।

पुरुषो मायया बद्धो मोचनं भक्तिहेतुकम्' ॥

इति समाधावनुभूतं तदा गीतार्थोऽपि स्फुरितः । अत एव तद्विस्तारत्वेन भागवतम् । एवं सति भागवतस्यापि पूर्वं स्वाधिकारानुसार्येव ज्ञानं जातम्, न तु यथार्थस्वरूपम् । पश्चाद्भगव-

त्कृपया सारस्वतकल्पानुसारिचरित्रस्य यथा स्वरूपं तादृशं ज्ञानं जातमिति तद्विस्तारेण पुनः कथितमिति न कश्चित्पूर्वपक्षावसर इति सर्वमनवद्यम्।

इदानीमपि श्रीभागवतं सर्वैः स्वाधिकारानुसारेणैव व्याख्यायते। श्रीमदस्मदाचार्यैर्यद्व्याख्यातं तत्सारस्वतकल्पानुसारेणैवेति सर्वं सुस्थम्। अत एव नारदेनापि व्यासं प्रति तथैवोक्तम्।

'यथा धर्मादयश्चार्था मुनिवर्यानुवर्णिताः।
न तथा वासुदेवस्य महिमा ह्यनुवर्णित' इति।

तेन समाधावनुभूतस्यैव कथनम्। विशेषकथनं तदेवानुवर्णनम्। वर्णनं तु पूर्वमपि कृतमेवेदानीं विस्तरतो वर्णनमेवानुवर्णनमित्यर्थः। अत एवाऽन्वित्युपसर्गकथनम्। अनेनाष्टादशान्तर्गतमेव भागवत पुनर्विस्तरेणानुवर्णितमिति न किञ्चिदनुपपन्नम्। तथा चात्र पूर्वोक्तानि स्कन्दपुराणोक्तानि ब्रह्माणं प्रति भगवद्वाक्यान्यनुसन्धेयानि। 'सम्भविष्यामि कल्पे'त्यारभ्येत्युक्त्वा 'अजं स भगवानि'त्यन्तम्। तत्र वेदार्थप्रदर्शनं ब्रह्मसूत्रकरणं गीतार्थाद्विस्तरेण भागवतकथनं स्वकर्तृकमेव प्रभुः कथयति नान्यकर्तृकमिति वक्ष्यामीति क्रियया ज्ञाप्यते। अत एव नारदेनापि 'न तथा ह्यनुवर्णित' इत्येवोक्तं न तूपदिष्टम्। यतो भगवज्ज्ञापितमेव तज्ज्ञातं भवति नान्यथेति। एवं सति जीवरूपेण तादृशं भागवतं कथं वक्तुं शक्यमत एवापरितोषः। भगवता ज्ञापिते तद्विस्तरकथनमेवानुवर्णनमुच्यत इति सर्वमवदातम्।

**इति श्रीमद्भागवतप्रमाणभास्करो नाम निर्णयः सम्पूर्णः॥**

---

॥ श्रीभागवतप्रतिपदमणिवरभावांशुभूषितमूर्तये नमः ॥

सागरस्थ श्रीगङ्गाधरभट्टप्रयुक्ता

# दुर्जनमुखचपेटिका



पं० कन्हैयालालविरचितया
प्रहस्तिकाव्याख्यया सहिता।

॥ श्रीहरये नमः ॥

श्रीमद्भागवतन्नाम पुराणं विष्णुसन्निभम्।
कलौ यत्कीर्तनान्नान्यत्साधनं परमार्थदम् ॥ १ ॥
पापण्डाकुलकल्मषाः कुकृतिनो निन्दन्ति ये वैदिकान्
तेषां भागवते प्रतीपमतिता युक्ता हि तन्मूलके।
तद्वाक्क्ष्वेडनिषेवणात्तधिषणा ये दैवसर्गे स्थिता
मा भूवन्निति मे विचाररचना पीयूषवाचः श्रुतिः ॥ २ ॥

तत्र तावत्केनचिद्भट्टोपनामककाशीनाथेन श्रीमद्भागवताख्ये महापुराणेऽनार्षत्वमुद्भावितम्¹, तन्निराकरिष्यन्तस्तस्य भेदत्वादनादेयवाक्यत्वं गङ्गाधरभट्टाः प्रतिजानते। तत्र महाभाष्यादिसम्मतं ग्रन्थादौ मङ्गलमाचरन्ति शिष्यशिक्षार्थं श्रोतृवक्तृणामभ्युदयार्थं च श्रीहरय इति। हरति दुःखानीति हरिः, श्रिया युक्तो हरिः श्रीहरिः, तस्मै गुरुरूपिणे नमः। गुरुरूपिण एव हरेर्दुःखदूरीकरणसमर्थत्वात्। "जनानामुपकाराय गुरुरूपी जनार्दनः। हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन" इति देवीभागवते इति॥ नहि केवलभागवतपदं शाक्तभागवतपरं भवितुमर्हति, भागवतपदस्य वैष्णवपरत्वेनैव व्यवहारात्। "एतानहं परमभागवतान्नमामी"त्यादौ तथादर्शनात्। नहि शाक्तिकेषु कचिदपि भागवतपदं श्रूयते। तस्माद्धर्मग्राहकमानेनैव भागवतपदं प्रसिद्धभागवतपरमेव। किञ्च, रूढिर्योगमपहरति इति न्यायात् केवलयौगिकार्थो न तत्र युक्तः। पुराणेषु श्रुत भागवतपदं प्रकृतभागवतमेव गमयति। श्लोक इति। या विश्वं वितनोति पालयति या संहर्त्ति कल्पक्षये इत्यादिमश्लोक एव संहरतीति। हृञ्-हरणे, इति भौवादिकत्वाद्धरतीति प्राप्तम्। "स्थालीपुलाक" इति एकस्मिन्नपि तण्डुलादौ परिचिते पकापकज्ञानं जायते। एवमिहापि सर्वमपि "प्रथमग्रास एव मक्षिकापाते ग्रासान्तरे तु छर्दिरेवे"त्यपि ज्ञेये सर्वमप्रतिबद्धमिति भावः॥

देवीभागवतप्रतिपादनश्लोके संहरति तावदशुद्धम्। तेन स्थालीपुलाकन्यायेन सर्वमपि तादृशमिति ज्ञेयम्॥

¹ इयं चपेटिका अन्या, रामचन्द्राश्रमस्य चान्या, प्रहस्तिकाकारेणैव रामचन्द्राश्रमस्य पृथक्तया स्वीकृतत्वात्।

**तथाहि न तावत्पञ्चलक्षणानि दशलक्षणान्यतिवर्तन्ते ।**
**यतो, पञ्चलक्षणतया श्रीभागवतस्य तत्त्वमपेयात् ।**
**अष्टादशपुराणानि कृत्वेति वचनान्न कृत्वान्तमपि तु**
**क्तनिवन्तं कर्त्रेत्यर्थान्न विरोधोऽणीयानपि ॥ ३ ॥**

---

तदेवोपपादयन्त आहुः—**तथा हि न तावदिति** । यत्तेनोक्तं पुराणं पञ्चलक्षणमिति लक्षणाद्दशलक्षणस्य श्रीभागवतस्य कथं पुराणत्वमिति? तत्रोच्यते, गन्धवती पृथ्वीति लक्षणे जलक्षितिप्राणभृतां चतुर्दशेत्युक्त्या चतुर्दशगुणशालित्वेऽपि न व्यभिचारः । असाधारणस्यैव लक्षणकत्वात् । दशलक्षणे भागवते प्रकृते लक्षणानां सत्त्वात्सर्गादिरूपाणामधिकसत्त्वे बाधकाभावात् । न हि "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणमि"त्यत्र तावन्मात्रमेव नियम्यते । किन्तु, गन्धसत्तावद्भूम्यां पुराणेषु पञ्चलक्षणत्वं विधीयते । पञ्चलक्षणानि दशलक्षणेषु न हीयन्ते । अपञ्चमात्रलक्षणेऽपि भागवते दशलक्षणानां सत्त्वात् । द्वयोर्नैकप्रतीतेः । श्रीभागवतस्य तत्त्वं पुराणत्वम् । किञ्च, कोशलक्षणमपि प्रायिकम् । ओषध्यः फलपाकान्ताः इति यावत् । शीतादिनाप्यौषधिना विना दर्शनात् फलपाकान्तत्वस्यान्यत्रापि सत्त्वात् । नामपक्षे तु तत्रापि तद्वक्तुं शक्यत्वाददोषः । किञ्च, पञ्चलक्षणं पुराणजातमित्यपि नियमाभावः । भविष्याग्निपुराणयोः व्रतकर्मणोरेव विस्तृतत्वात् । विष्णुपुराणेऽपि षडंशेष्वपि षड्लक्षणोक्तेः भारतादिष्वतिव्याप्तेश्च प्रायिकमेवेति निश्चयः । किञ्च, ब्रह्मवैवर्ते कृष्णखण्डे समाप्तिसदेशे । "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ तदल्पपुराणानां लक्षणं तु विदुर्बुधाः । दशाधिकं लक्षणं च महतां परिकीर्तितम्" इत्युक्तेर्न शङ्काकलङ्कः कश्चित् । न च महत्सु स्कान्दपाद्मादिषु तत्त्वमस्त्येवेति निश्चीयते कथं तेषां तथात्वमिति वाच्यम्, पञ्चलक्षणत्वमेवास्येति अप्रतिज्ञातत्वात् ॥२॥

ननु "अष्टादशपुराणानि कृत्वा सत्यवतीसुतः । भारताख्यानमखिलं चक्रे तदुपबृंहितम्" ॥ इत्युक्तेः, श्रीभागवतस्य तु "कृतवान्भारतं यस्त्वं सर्वार्थपरिबृंहितमि"त्याद्युक्त्या भारतोत्तरत्वमायाति । कथमष्टादशान्तर्गतत्वम्? तत्राहुः—**अष्टादशेति** । "राजयुनि युधि कृञ" इति सूत्रे कृञ इति योगविभागात्क्वनिप्, तुकि च कृते कृत्वेति सिद्धम् । किञ्च, स्कन्दमत्स्यपुराणयोः प्राचीनपुस्तकेषु कर्त्रेति पाठान्न दोषः प्रसक्तिः । किञ्च, "अष्टादशपुराणानि, अष्टौ व्याकरणानि च । ज्ञात्वा सत्यवतीसूनुश्चक्रे भारतसंहिताम्" इति भविष्यप्रथमाध्यायाद्भारतेऽष्टादशपुराणार्थतात्पर्यस्य सत्त्वात् । पूर्वापरभावोऽर्थकृतः, नतु पाठकृतः । तेषामनादिसिद्धत्वस्य मात्स्ये "पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणोदितम् । नित्यं शब्दमयं ब्रह्म शतकोटिप्रविस्तरम् ॥ अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः । पुराणमेकमेवासीत्तस्मिन्कल्पान्तरेऽनघ ॥ इति कीर्तनाद्वेदेऽपि पुराणेतिहासानां महतो भूतस्य निःश्वसितत्वेऽनादित्वख्यापनात् । भारतेऽपि—"यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचिदि"त्युक्तेरप्युक्तोऽर्थः सिद्ध्यति । ननु

यदि च देवीभागवतमात्रवचसा श्रीभागवतस्याष्टादशान्तर्गतत्वमलीकभावमनुवर्तेत। तदा द्वादशस्कन्धे पुराणान्युपक्रम्य, "इदं वै ब्रह्मणा पूर्वमि"ति श्रीभागवतवाक्येन देवीभागवतस्यैव तत्त्वं किं न स्यात् ॥ ४ ॥

भारतीया तु कल्पान्तरीया, श्रीभागवतीया तु सारस्वतकल्पीया, अतो न विरोधः।

---

भारतेऽपि निर्विण्णोत्तरं व्यासो भागवतं चकारेति भागवतोत्कर्ष एवमर्थवाद एव स्यादिति चेन, अष्टादशपुराणानि भारतं च पूर्वमेव सिद्धम् । परन्तु व्यासस्य परितोषार्थं सर्वेषामुत्तरे स्फुरद्रूपमभूदिति माहात्म्यमुच्यते । किञ्च, पाठकृतपौर्वापर्यस्वीकारे भविष्यमार्कण्डेयाग्निपाद्मादीनामपि तथात्वं स्यात् । तथाहि मार्कण्डेयारम्भे जैमिनिवाक्यम्—"तदिदं भारताख्यानं बह्वर्थपरिगर्भितम् । तत्त्वतो ज्ञातुकामोऽहं भगवंस्त्वामुपागतः" इत्युक्तेः । भारतोत्तरत्वं मार्कण्डेयेऽप्यागतम् । "गीतासारं प्रवक्ष्यामि सर्गगीतोत्तरोत्तरम्" इत्युक्तेः । अग्निपुराणेऽपि तथात्वमापतितम् । "गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः । या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता" इत्युक्तेः पाद्मस्यापि तथात्वं भवेत् । किञ्च, देवीभागवते तृतीये "वेदशाखा पुराणानि वेदान्तं भारतं तथा । कृत्वा सम्मोहसम्मूढोऽभवद्राजन् मनागपि" इति । तथाप्यष्टादशबहिर्भावमागतमुभयोर्यत्समो दोषः परिहारोऽपि तादृश इत्यलम् ॥ ३ ॥

ननु देवीभागवते—"अष्टादशसहस्रं वै पुण्यं भागवतं किल" ॥ "श्रीमद्भागवतं पुण्यं सर्वदुःखौघनाशनम् । श्रुत्वा भागवतं पुण्यं मुच्यते भवसङ्कटात् ॥ पञ्चलक्षणसंयुक्तं विद्याविलसितान्वितम्" इत्यादिवचनैः देवीभागवतस्यैव पुराणत्वमित्यत आहुः यदीति—"इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे । स्थिताय भवभीताय कारुण्यात्सम्प्रकाशितम्" ॥ इत्यादिवाक्यकदम्बेन देवीभागवतस्य तत्त्वमनार्षत्वम् । किञ्च, देवीभागवते—सूत उवाच "शृण्वन्तु सम्प्रवक्ष्यामि पुराणानि मुनीश्वराः । भद्वयं मद्वयं चैव ब्रत्रयं वचतुष्टयम् । अनापलिङ्गकूमार्कं पुराणानि विदुर्बुधाः" ॥ इत्यत्र व्याख्याने—"अष्टादशसहस्रं तु पुण्य भागवतं किल" इति भागवतमुक्त्वा, तदग्रे "तथैवोपपुराणानि शृण्वन्तु मुनिसत्तमाः" इत्यादिना माहेश्वरं भागवतं वाशिष्ठं च सविस्तरमिति भागवतद्वयस्य कण्ठरवेणोक्तत्वात् । तत्पक्षे कथमस्यापलापः । किञ्च, "तत्र भागवतं पुण्यं पञ्चमे वेदसम्मितम्" इति देवीभागवते पञ्चमभागवतस्य वेदसम्मितत्वमुक्त्वा, तस्य तु पञ्चमत्वं नोक्तम् । ततः श्रीमद्भागवतस्य पञ्चमत्वं समायाति । तथाहि द्वादशे—"ब्राह्मं दशसहस्राणि पाद्मं पञ्चोनषष्टि च । श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥ दशाष्टौ श्रीभागवतं नारदं पञ्चविंशतिः" इत्युक्तेः । श्रीमद्भागवते तु भागवतमेकमेवोक्तम् । तत्पक्षे देवीभागवतस्यापलापः सम्भवति ॥ ४ ॥

ननु भारते भीष्मेण श्रीशुकस्य मुक्तिरुक्ता परीक्षिच्छुकसमागमो नोक्तः । किञ्च, विष्णुपुराणे—"मायामोहनात्मकपुरुषस्य विष्णुशरीरादुत्पन्नस्य बुद्धावतारत्वमुक्तम् "मायामोहस्वरूपोऽसौ बुद्धो दनुसुतोऽभवत्" इत्यादिविरोधान्न भागवतं प्रमाणमित्यत आहुः—भारतीयेति ।

तथाहि न तावत्पञ्चलक्षणानि दशलक्षणान्यतिवर्तन्ते ।
यतो, पञ्चलक्षणतया श्रीभागवतस्य तत्त्वमपेयात् ।
अष्टादशपुराणानि कृत्वेति वचनान्न कृत्वान्तमपि तु
क्वनिजन्तं कर्त्रेत्यर्थान्न विरोधोऽणीयानपि ॥ ३ ॥

---

तदेवोपपादयन्त आहुः—तथा हि न तावदिति । यत्तेनोक्तं पुराणं पञ्चलक्षणमिति लक्षणाद्दशलक्षणस्य श्रीभागवतस्य कथं पुराणत्वमिति? तत्रोच्यते, गन्धवती पृथ्वीति लक्षणे जलक्षितिप्राणभृतां चतुर्दशेत्युक्त्या चतुर्दशगुणशालित्वेऽपि न व्यभिचारः । असाधारणस्यैव लक्षणकत्वात् । दशलक्षणे भागवते प्रकृते लक्षणानां सत्त्वात्सर्गादिरूपाणामधिकसत्त्वे बाधकाभावात् । न हि "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणमि"त्यत्र तावन्मात्रमेव नियम्यते । किन्तु, गन्धसत्तावद्भूम्यां पुराणेषु पञ्चलक्षणत्वं विधीयते । पञ्चलक्षणानि दशलक्षणेषु न हीयन्ते । अपञ्चमात्रलक्षणेऽपि भागवते दशलक्षणानां सत्त्वात् । द्वयोर्नैकप्रतीतेः । श्रीभागवतस्य तत्त्वं पुराणत्वम् । किञ्च, कोशलक्षणमपि प्रायिकम् । औषध्यः फलपाकान्ताः इति यावत् । शीतादिनाप्यौषधिना विना दर्शनात् फलपाकान्तत्वस्यान्यत्रापि सत्त्वात् । नामपक्षे तु तत्रापि तद्वक्तुं शक्यत्वाददोषः । किञ्च, पञ्चलक्षणं पुराणजातमित्यपि नियमाभावः । भविष्याग्निपुराणयोः व्रतकर्मणोरेव विस्तृतत्वात् । विष्णुपुराणेऽपि षडंशेष्वपि षड्लक्षणोक्तेः भारतादिष्वतिव्याप्तेश्च प्रायिकमेवेति निश्चयः । किञ्च, ब्रह्मवैवर्त्ते कृष्णखण्डे समाप्तिसदेशे । "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ तदल्पपुराणानां लक्षणं तु विदुर्बुधाः । दशाधिकं लक्षणं च महतां परिकीर्तितम्" इत्युक्तेर्न शङ्काकलङ्कः कश्चित् । न च महत्सु स्कान्दपाद्मादिषु तत्त्वमस्त्येवेति निश्चीयते कथं तेषां तथात्वमिति वाच्यम्, पञ्चलक्षणत्वमेवास्येति अप्रतिज्ञातत्वात् ॥२॥

ननु "अष्टादशपुराणानि कृत्वा सत्यवतीसुतः । भारताख्यानमखिलं चक्रे तदुपबृंहितम्" ॥ इत्युक्तेः, श्रीभागवतस्य तु "कृतवान्भारतं यस्त्वं सर्वार्थपरिबृंहितमि"त्याद्युक्त्या भारतोत्तरत्वमायाति । कथमष्टादशान्तर्गतत्वम्? तत्राहुः—अष्टादशेति । "राजयुनि युधि कृञ" इति सूत्रे कृञ इति योगविभागात्क्वनिप्, तुकि च कृते कृत्वेति सिद्धम् । किञ्च, स्कन्दमत्स्यपुराणयोः प्राचीनपुस्तकेषु कर्तेति पाठान्न दोषः प्रसक्तिः । किञ्च, "अष्टादशपुराणानि, अष्टौ व्याकरणानि च । ज्ञात्वा सत्यवतीसूनुश्चक्रे भारतसंहिताम्" इति भविष्यप्रथमाध्यायाद्भारतेऽष्टादशपुराणार्थतात्पर्यस्य सत्त्वात् । पूर्वापरभावोऽर्थकृतः, नतु पाठकृतः । तेषामनादिसिद्धत्वस्य मात्स्ये "पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणोदितम् । नित्यं शब्दमयं ब्रह्म शतकोटिप्रविस्तरम् ॥ अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः । पुराणमेकमेवासीत्तस्मिन्कल्पान्तरेऽनघ ॥ इति कीर्तनाद्वेदेऽपि पुराणेतिहासानां महतो भूतस्य निःश्वसितत्वेऽनादित्वख्यापनात् । भारतेऽपि—"यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचिदि"त्युक्तेरप्युक्तोऽर्थः सिद्ध्यति । ननु

यदि च देवीभागवतमात्रवचसा श्रीभागवतस्याष्टादशान्तर्गतत्वमलीकभावमनुवर्तेत । तदा द्वादशस्कन्धे पुराणान्युपक्रम्य, "इदं वै ब्रह्मणा पूर्वमि"ति श्रीभागवतवाक्येन देवीभागवतस्यैव तत्त्वं किं न स्यात् ॥ ४ ॥

भारतीया तु कल्पान्तरीया, श्रीभागवतीया तु सारस्वतकल्पीया, अतो न विरोधः ।

---

भारतेऽपि निर्विण्णोत्तरं व्यासो भागवतं चकारेति भागवतोत्कर्ष एवमर्थवाद एव स्यादिति चेन्न, अष्टादशपुराणानि भारतं च पूर्वमेव सिद्धम् । परन्तु व्यासस्य परितोषार्थं सर्वेषामुत्तरे स्फुरद्रूपमभूदिति माहात्म्यमुच्यते । किञ्च, पाठकृतपौर्वापर्यस्वीकारे भविष्यमार्कण्डेयाग्निपाद्मादीनामपि तथात्वं स्यात् । तथाहि मार्कण्डेयारम्भे जैमिनिवाक्यम्—"तदिदं भारताख्यानं बह्वर्थपरिगर्भितम् । तत्त्वतो ज्ञातुकामोऽहं भगवंस्त्वामुपागतः" इत्युक्तेः । भारतोत्तरत्वं मार्कण्डेयेऽप्यागतम् । "गीतासारं प्रवक्ष्यामि सर्वगीतोत्तरोत्तरम्" इत्युक्तेः । अग्निपुराणेऽपि तथात्वमापतितम् । "गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः । या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता" इत्युक्तेः पाद्मस्यापि तथात्वं भवेत् । किञ्च, देवीभागवते तृतीये "वेदशाखा पुराणानि वेदान्तं भारतं तथा । कृत्वा सम्मोहसम्मूढोऽभवद्राजन् मनागपि" इति । तथाप्यष्टादशबहिर्भावमागतमुभयोर्यत्समो दोषः परिहारोऽपि तादृश इत्यलम् ॥ ३ ॥

ननु देवीभागवते—"अष्टादशसहस्रं वै पुण्यं भागवतं किल" ॥ "श्रीमद्भागवतं पुण्यं सर्वदुःखौघनाशनम् । श्रुत्वा भागवतं पुण्यं मुच्यते भवसङ्कटात् ॥ पञ्चलक्षणसंयुक्तं विधाविलसितान्वितम्" इत्यादिवचनैः देवीभागवतस्यैव पुराणत्वमित्यत आहुः यदीति—"इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे । स्थिताय भवभीताय कारुण्यात्सम्प्रकाशितम्" ॥ इत्यादिवाक्यकदम्बेन देवीभागवतस्य तत्त्वमनार्षत्वम् । किञ्च, देवीभागवते—सूत उवाच "शृण्वन्तु सम्प्रवक्ष्यामि पुराणानि मुनीश्वराः । मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् । अनापलिङ्गकूमार्कं. पुराणानि विदुर्बुधाः" ॥ इत्यत्र व्याख्याने—"अष्टादशसहस्रं तु पुण्यं भागवतं किल" इति भागवतमुक्त्वा, तदग्रे "तथैवोपपुराणानि शृण्वन्तु मुनिसत्तमाः" इत्यादिना माहेश्वरं भागवतं वाशिष्ठं च सविस्तरमिति भागवतद्वयस्य कण्ठरवेणोक्तत्वात् । तत्पक्षे कथमस्यापलापः । किञ्च, "तत्र भागवतं पुण्यं पञ्चमे वेदसम्मितम्" इति देवीभागवते पञ्चमभागवतस्य वेदसम्मितत्वमुक्त्वा, तस्य तु पञ्चमत्वं नोक्तम् । ततः श्रीमद्भागवतस्य पञ्चमत्वं समायाति । तथाहि द्वादशे—"ब्राह्मं दशसहस्राणि पाद्मं पञ्चोनषष्टि च । श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥ दशाष्टौ श्रीभागवतं नारदं पञ्चविंशतिः" इत्युक्तेः । श्रीमद्भागवते तु भागवतमेकमेवोक्तम् । तत्पक्षे देवीभागवतस्यापलापः सम्भवति ॥ ४ ॥

ननु भारते भीष्मेण श्रीशुकस्य मुक्तिरुक्ता परीक्षिच्छुकसमागमो नोक्तः । किंच, विष्णुपुराणे—"मायामोहनात्मकपुरुषस्य विष्णुशरीरादुत्पन्नस्य बुद्धावतारत्वमुक्तम् "मायामोहस्वरूपोऽसौ बुद्धो दनुसुतोऽभवत्" इत्यादिविरोधान्न भागवतं प्रमाणमित्यत आहुः—भारतीयेति ।

शान्तिपर्वणि, अपि, अत एव बृहद्वामनपुराणे श्रुतिभिर्निर्गुणब्रह्मसाक्षात्कारेऽर्थिते श्रीवृन्दावनलीलाप्रदर्शने भूयस्तत्स्वरूपोपभोगप्रार्थने "कल्पे सारस्वते प्राप्ते व्रजे गोप्यो भविष्यथ" इति हरिवाक्यम् । मात्स्येऽपि, "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः । तद्वृत्तान्तोद्भवं लोके श्रीभागवतमिष्यते" इति । एवं महाभारतभागवतयोर्विरोधान्तरं च परिहरणीयम् ॥ ५ ॥

---

कल्पान्तरीया नाम वाराहकल्पीया । शान्तिपर्वणि शुकमुक्तिकथनेन । अपीति । परीक्षिच्छुकसम्वादेनापि । किञ्च, भारते शुकमुक्तिरुक्ता, सा जीवन्मुक्तिरूपेति तट्टीकायामुक्तम् । अन्यथा "अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च । अहं वेद्मि शुको वेत्ति सञ्जयो वेत्ति वा न वा" इति भारत एव विरोधः प्रसज्जेत । ननु जीवन्मुक्तस्य कथं परोपदेशादिकं सम्भवति इति चेन्न, सनकादिवत्सम्भवात् । किञ्चान्यथा, शुकजातकज्योतिर्निबन्धकर्तृत्वानुपपत्तिश्च । तदुक्तम्—"श्रीमद्भागवतं शुकास्यगलितं यच्छ्रीधरस्वामिना । सुव्यक्तं क्रियते गणेशकविना गाथोक्तितज्जातकम्" इति । "नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्सूनुपराशरं च । व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥ श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम्" इति गुरुपरम्पराया मुक्तिः परीक्षित्पर्यन्तमनुवृत्तिरुपदेशश्च न सम्भवति । 'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युपक्रमे' इति भागवत एव तत् समाधानात् । भारते तक्षकदग्धस्यापि परीक्षितराज्ञो राज्यासक्तस्य निर्वाणवर्णनं भागवतोपदेशमनुमापयति । किञ्च, "छाया स्वपुनसदृशीं सर्वतो नवगा मम । द्रक्ष्यसे त्वं च लोकेऽस्मिन्मत्प्रसादान्महामुने" इति भारत एव छायाशुकस्योक्तत्वात्तद्विवीचापरो(?)मुक्तो व्यासभार्यासम्भूतोऽरणीसम्भूतो य. स च जीवन्मुक्तः तेनैव भागवत कथित ननु छायाशुकेन । स वै निवृत्तिनिरत इत्यादिषु तद्दर्शनात् । "ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे" इत्यत्र साक्षात्पितुरित्युक्तेः । "स कृत्वा शुककन्याया ब्रह्मदत्तमजीजनत्" इत्यनेन च छायाशुकः पृथङ्निर्दिष्टः । भागवतमेव सारस्वतकल्पीयम् । तत्र मानमाहुः—अत एवेति । बृहद्वामनपुराणे उत्तरभागे भृगुब्रह्मसम्वादे श्रुतीनां वाक्यम् । "नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत । सगुणं ब्रह्म सर्वेदं वस्तुबुद्धिर्न ते पुनः । तद्रूपं दर्शयास्माकं निर्गुण प्रकृतेः परम्" ॥ ततः श्रीवृन्दावनचन्द्रः स्वीकृत्य श्रीवृन्दावनं दर्शयामास । तत्र कोटिकन्दर्पदर्पहरस्वस्वरूपदर्शनक्षमितान्तःकरणाः प्रत्याह—"आगामिनि विरञ्चौ तु जाते सृष्ट्यर्थमुद्यति । कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ" ॥ इति हरिवाक्याच्छ्रुतिरूपागोपिकार्थं सारस्वत एवावतीर्णस्तद्वृत्तं तं तस्मिन्नेवास्तीति भाव. । ननु "अथ तु ब्रह्मणः कल्पः सविकल्प उदाहृत. । यथा पुरस्ताद्व्याख्यास्ये पाद्मं कल्पमथो शृणु" इति भागवतोक्तेः । सारस्वतकल्पो भागवतेन प्रतीयते इति चेन्न, "वाराह इति व्याख्यातो यत्रासीच्छूकरो हरि." इति तदुक्तं तावन्मात्रस्यैव तत्परत्वं न तु सर्वस्य । ननु "कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ" इति तत्कथानक गिरिराज खण्डे एवास्तु इति

**नाप्यन्यद्भागवतं नामाशङ्कनीयमिति शङ्का, येन, सकलाचार्यसम्मतस्य श्रीभागवतस्यान्यथाभावो भवितुमीष्टे ॥ ६ ॥**

---

चेन्न, "रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च" इत्यादिना ब्रह्मवैवर्तस्य तत्कल्पविषयत्वमुक्तम्। मात्स्ये पुराणेषु च स्वस्वकल्पव्यवस्थानुक्तत्वेऽपि मात्स्यस्यैव व्यवस्थापकत्वमास्ताम्। **विरोधान्तरं चेति**। विष्णुपुराणादीनामित्यर्थः। यदुक्तं पुराणान्तरे-"मायामोहनात्मकपुरुषस्य बुद्धत्वम्"। श्रीभागवते तु "बुद्धो नाम्ना जिनसुतः कीटकेषु भविष्यति" इति। तदपि कल्पभेदेन समाधेयमन्यथाऽऽर्षशास्त्रमात्रस्यैव परस्परविरुद्धतया हेयत्वं स्यात्। तथाहि-वैष्णवेषु पुराणेषु विष्णोः सृष्टिरभवदित्युच्यते। शैवशाक्तिकसौरगाणपत्यादिषु तत्तद्देवेभ्य इति। किन्तु, देवीभागवते महान्विरोधः, देवीकृतवृत्रवधोक्त्या सर्वपुराणेभ्यः स्मृतिभ्यस्तन्त्रेभ्यश्च वेदेभ्यश्च। ऋग्वेदे माध्यन्दिने च "वृत्रं हन्ति वृत्रहा शतक्रतुः", तैत्तिरीयेऽपि "इन्द्रो वृत्रं जघ्निवान्", "इन्द्रो वृत्रं हत्वा", "इन्द्रो वृत्राय वज्रमुदयच्छदि" त्यादिवेदविरोधाद्वेदविरुद्धा स्मृतिर्नादेयेति देवीभागवतं वैदिकानादेयमिति फलति ॥ ५ ॥

ननु, श्रीधराचार्येणैवान्यद्भागवतमिति नाशङ्कनीयमित्यनेनैव वैष्णवाभिमतभागवते शङ्कासद्भावस्योक्तत्वात्, न निर्मूला प्रसिद्धिरिति न वैष्णवाभिमतं भागवतं प्रमाणमित्यत आहुः—**नाप्यन्यद्भागवतमिति**। तत्रानाशङ्कनीयहेतुः **सकलाचार्यसम्मतस्येति**। तत्र श्रीशङ्कराचार्याणां गोविन्दाष्टके मृत्स्नामत्सीहे"ति यशोदा ताडनशैशवसन्त्रासमित्युक्तेर्भक्षणलीलायाः पुराणान्तरेऽप्रसिद्ध्या सिद्ध्यति। शङ्कराचार्याणामस्मिन्नेव भागवते सम्मतिरित्यादिना सम्मतिरित्यादिना सर्वाचार्यसम्मतिः रामचन्द्राश्रमकृतदुर्जनमुखचपेटिकायामस्तीति नेह तन्यते। ननु श्रीधरेण कथमाशङ्कितमिति चेच्छृणु। देवीपुराणारम्भे—"नमस्कृत्य शिवां देवीं शर्वं भागवतं तथा। पुराणं सम्प्रवक्ष्यामि यथोक्तमृषिसत्तमैः" इति पाठेन तस्यैव भागवतत्वं केचिच्छाक्तिका मन्यन्ते। तन्निरासार्थमेवोक्तलक्षणाभावान्मात्स्यविरोधात्तद्भागवतं नाशङ्कनीयमिति श्रीधराभिप्रायः। ननु तत्रत्यभागवतपदस्य का गतिः। शर्वविशेषणत्वेन चरितार्थत्वम्। यद्वा, भागवतं भगवतोऽंशं व्यासं पुराणाचार्यत्वात्तथाशब्देन सम्बन्धादेतदेव युक्ततरम्। किञ्च, आदित्यपुराणपरतया। "ततो भागवतं प्रोक्तं भागवद्वयविभूषितम्। ददाति सूर्यभक्ताय यस्तु भागवतं द्विजाः। जीवेद्वर्षशतं साग्रमन्ते वैवस्वतं पदमि"ति। यदन्यत्र चोपपुराणेष्वेतत्परतया भागवतपदम्, तदेव निरस्यते। यदि शङ्कामात्रस्यैव वस्तुकलङ्कत्वं स्वीकुरुषे, तदा तु, "त्रयो वेदस्य कर्तारो मुनिभण्डनिशाचराः" "वेदं कालासुरकृतम्" इति शङ्कायाः सत्त्वाद्वेदं पौरुषेयमिति तार्किकादीनां शङ्का समाधानानां जागरूकत्वात्तत्रापि तथात्वं किं न भवेत्? किञ्च, संशोधितपुस्तकेषु नान्यद्भागवतमिति पाठान्न चोद्यम् ॥ ६ ॥

३ त०दी०नि०परि.

गायत्र्यर्थप्रतिपादकत्वं गायत्र्युद्धारकत्वञ्च श्रीधरीयभावदीपिकाप्रकाशे व्यवस्थापितं तत एवावधीयताम् ॥ ७ ॥

---

ननु मात्स्ये—"यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः" इत्यादिना भागवतलक्षणमुक्तम्। गायत्रीच्छन्दसारम्भस्तु देवीभागवत एव सत्त्वात्तदेव भागवतमित्यत आहुः—गायत्र्यर्थेति। गायत्र्या च समारम्भो०। गायत्रीपद। गायत्रीप्रतिपाद्यार्थपरम्। शब्दार्थयोरर्थस्यैव प्राधान्यम्। यथाऽऽद्युतीयया हंसश्लाघनलावेलापस्तम्बसूत्रम्। तेषां चासत्त्वेनेति पाठात्। अन्यथा। "गायत्रीभाष्यरूपोऽयं श्रीमद्भागवताभिधः" इत्यनेन विरोधः। यत्राधिकृत्य गायत्रीमित्यत्राधिकारशब्द उत्तरोत्तरान्वयवाची। यतो मात्स्येऽस्मिन्प्रकरणे "वाराहकल्पवृत्तान्तमधिकृत्य पराशरः। यत्राह धर्मानखिलांस्तदुक्तं वैष्णवं विदुः॥ यत्राधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः। भविष्यचरितप्राय भविष्य तदिहोच्यते" इत्यादिषु ग्रन्थान्वितार्थस्यैवाधिकारशब्देन निरूपणात्। तच्च, प्रकृतभागवत एव घटते तद्भाष्यरूपत्वात्। किञ्च, देवीभागवतेऽपि प्राचीनपुस्तके "सर्वचैतन्यरूपां तामाद्यां विद्यां च धीमहि। यया व्याप्तमिदं सर्वं बुद्धिं सा नः प्रचोदयात्" इति पाठेन छन्दोलक्षणस्यानन्वयात्। किञ्च, अधुना त्रिपादपाठेऽपि षडक्षरपादविश्रान्तिरूपगायत्रीलक्षणाभावो दुःपरिहर। यदि मूलमन्त्रेऽपि तथेति चेन्न, अत्र छन्दसः पारिभाषिकत्वमेव। अन्यथा त्रिपादत्वभङ्गापत्तिः। किञ्च, पराशरस्मृतौ "त्र्यम्बकमिति चैवात्र वासिष्ठस्यार्षमुच्यते। देवतोमापतिर्मत्र छन्दस्त्रिष्टुप्प्रकीर्तितम्" इति तत्रानुष्टुप्सत्त्वेऽपि त्रिष्टुबुक्तिर्नान्यथा घटते। श्रीधरीयप्रकाशे सागरस्थबालकृष्णगुरुचरणविरचिते विशदतया प्रतिपादितत्वात्। तत्र जन्माद्यस्य यत इत्यनेन सवितुर्देवस्य परमिति, वरेण्यमित्यस्य स्वराडिति, भर्ग इत्यस्य धाम्ना स्वेन, सदेत्यादितृतीयपादस्य विवरणमिति रीत्या वर्तते। न च देवीभागवत धीमहि प्रचोदयादिति पदद्वयघटितत्वेन प्रतिपदोक्तत्वेन कुतो न गृह्यते, यतो गायत्रीषु सर्वत्र तयोर्घटकत्वादिति वाच्यम्। यत्र यत्किञ्चिद्गायत्रीस्थपदघटिता श्रुत्यादिसम्मतानुरूपगायत्रीति लक्षणं वाच्यम्, न तु धीमहि प्रचोदयादिति पदद्वयघटिता विद्महे पदस्य तत्र नियमदर्शनात्। यद्वा, कात्यायनैः, ब्राह्मणं त्रिष्टुभा राजन्यं जगत्या वैश्यमथवा सर्वेषां च गायत्रीत्युक्तम्। तत्र तेषु मन्त्रेषु ता सवितुर्वरेण्यस्य चित्रामहं वृणे सुमतिं विश्वजन्याम्। यामस्य कण्वो अदुहत्प्रपीनां सहस्रधारां पयसा महीं गामत्र सवितुर्वरेण्यस्येति। विश्वारूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे। विनाकमख्यत्सविता वरेण्यो अनुप्रयाणमुषसो विराजतीत्यत्र च गायत्र्या त्रिष्टुब्जगत्या त्रयाणामुपनयनम्। गायत्र्यामविशेषो वा मुख्यादिष्वपरेषु चेति। यत्किञ्चिद्गायत्रीमन्त्रस्य पदमादायैव गायत्रीत्वव्यवहारस्य पराशरेणोक्तत्वात्। क्षत्रियगायत्री वैश्यगायत्रीति प्रसिद्धेश्च। वैदिकेऽनुष्ठानमन्त्रे तथा दर्शनाच्च। तस्मादत्रापि धीमहीति पदमादाय तद्व्यवहारे दोषाभावः। अर्थपक्षे तु श्रीमद्भागवत एव लक्षणसमन्वयः। **धियो यो नः प्रचोदयादिति**। य इति पुल्लिङ्गनिर्देशात्तेने ब्रह्म हृदा य इति पुल्लिङ्गविवरणात्। "यो देवः सविताऽस्माकं धियो धर्मादिगोचरे। प्रेरयेत्तस्य तद्भर्गस्तद्वरेण्यमुपास्महे"

अपि च वृत्रासुरवधोपलक्षितस्य भागवतत्वं तु वृत्रासुरस्य परमभक्तत्वादिति अनुसन्धत्स्व । न चासुरस्य देवीभक्तत्वं दृष्टं तत एव श्रीमद्भागवतमेव तद्विषयमिति गम्यते ॥ ८ ॥

हयग्रीवब्रह्मविद्याऽत्राऽपि श्रीनारायणवर्मरूपा षष्ठस्कन्धे चकास्तीति न, तदभावप्रयुक्तं श्रीभागवतस्य लक्षणानन्वितत्वं वक्तुं केनापि शक्यते नाम ॥ ९ ॥

---

इति स्मृतेश्च । किञ्च—"अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः । गायत्रीभाष्यरूपोऽसौ श्रीमद्भागवताभिधः" इति गारुडोक्तलक्षणस्यात्रैव घटितत्वात् । जन्माद्यस्य यतः इत्यादिसूत्रविवरणदर्शनात् । अथवा गायत्र्या च समारम्भ इति गायत्रीमन्त्रं पठित्वा समारम्भः कार्य इत्यर्थः । "अथवा हवनं कुर्याद्गायत्र्या सुसमाहितः, तन्मयत्वात्पुराणस्येति" पाद्मवचनात् ॥ ७ ॥

ननु वृत्रासुरवधोपेतमिति लक्षणस्य श्रीमद्भागवतावतारकत्वं कथम्? कंसासुरवधस्य तदवतारकत्वात्तदेव वाच्यम्; देवीभागवते तु सकलागमप्रतिपादितदेवीकर्तृकवृत्रवधकथनाद्भगवत्त्वेव घटकत्वप्राप्तिरित्यत आहुः—**अपि चेति** । वृत्रासुरस्य परमभक्तत्वं तु चित्रके कथानके सुव्यक्तम् । वृत्रकृतचतुष्टयश्लोकात्मकस्तुतावपि परमभक्तत्व दर्शितम् । देवीभक्तत्वमिति देव्या भक्तो मर्दितो भञ्जधातोरनिट्त्वात् क्तप्रत्यये किल्वान्न लोपे साधुः । दृष्ट शास्त्रेषु इति शेषः । देवीभागवत एव इन्द्रोद्धतशक्त्या वृत्रवधः पठ्यते, नत्वन्यत्र । अत इदमेवाप्रमाणम् । तत्पूर्वमेवोक्तम् । ननु "या देवी माहिषं जघ्ने क्रूरं वृत्रासुरं तथा । साध रक्तासुरं हत्वा स्वाराज्यं ते प्रयच्छतु" इत्यादिलपुराणमस्मिन्नर्थे प्रमाणमिति चेन्न "वृत्रप्राणहरे देवि नारायणि नमोऽस्तु ते" इति मार्कण्डेयेन नारायणशक्त्यामेव वृत्रवधोपसंहारात् । तच्च षष्ठस्कन्धे "मत्तेज उपबृंहितः", हरेर्दधीचेस्तपसा च तेजितः", "निगीर्णोऽप्यसुरेन्द्रेण न ममारोदरङ्गतः । महापुरुषसन्नद्धो योगमाया बलेन च" इत्यादौ श्रीमद्भागवत एव प्रमाणतयाऽवतरतीत्यलम् ॥ ८ ॥

ननु हयग्रीवब्रह्मविद्या यत्रेति लक्षणव्याप्यत्वात्कथं भागवतमिति चेदत्राहुः—**हयग्रीवेति** । षष्ठस्कन्धे "तामेवाधिगतो दध्यङ्", "अश्विभ्या ब्रह्मनिष्कलम्" । यद्वा । "अश्वरो नाम तयोरमर्तां व्यधात् । दध्यङ्ङाथर्वणस्त्वष्ट्रे वर्मामेद्य मदात्मकम् । विश्वरूपाय यत्प्रादात्त्वष्टा यत्त्वमधास्तुनः" । इत्युक्तेः । अपि च, "अश्वस्य शीर्ष्णा प्रपदीमुवाचे"ति वेदप्रसिद्धिः । "तेनामेता ब्रह्मविद्या वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्" इति मण्डूकोक्तेश्च । हयग्रीवब्रह्मविद्या स्त्रीदेवता भवितुं नार्हति, येन मन्त्राः पुंदेवताः । प्रोक्ता विद्या स्त्रीदेवता मता इति विरुध्यते । यदश्वशिरसा दधीचिना ब्रह्मज्ञानमुक्त तद्धयग्रीवब्रह्मविद्याशब्दवाच्यम्, श्रीभागवत एव ॥ ९ ॥

पुराणान्तरे हि "ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः । हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा। गायत्र्या च समारम्भस्तद्वै भागवतं विदुः॥ स्कन्धा द्वादश एवात्र कृत्स्नेन विहिताः शुभाः। द्वात्रिंशत्रिशतं पूर्णमध्यायाः परिकीर्तिताः" इति । न च श्रीभागवते पञ्चत्रिंशत्रिशतमध्यायाः इति वक्तव्यम् । "द्वात्रिंशत्रिशतं च यस्य विलसच्छाखा" इति श्रीधरीयोक्तेरघासुरवधादध्यायत्रयस्य प्रक्षिप्तत्वात् ॥ १० ॥

अम्बरीषशुकप्रोक्तमित्यत्र चाम्बरीषस्य भक्तत्वात् । श्रीमद्भागवतस्य पठनमेवाभिप्रेतमिति लक्षयामहे । शुकाय प्रोक्तमिति समासस्तु क्लिष्टः ॥ ११ ॥

हेमसिंहसमन्वितमिति तु सिंहासनपरमित्युक्तेरन्यत्र व्याख्यातम् । यदि देवीभा-

---

ननु भागवतेऽध्यायत्रयाधिक्याद्द्वात्रिंशत्रिशतं पूर्णमध्यायाः परिकीर्तिता इत्यनेन विरोध इत्यत आहुः—**पुराणान्तर इति** । अघासुरवधाध्यायत्रयस्येति । अघवधवत्सहरणब्रह्मस्तुतिरूपाणां त्रयाणां भागवतविरोधात्प्रक्षिप्तत्वं द्वात्रिंशत्रिशतं च यस्येति श्रीधरोक्तेरस्मिन्पञ्चत्रिंशदर्थखण्डनं विरोधदर्शनं च स्वकृतजपमालायां समर्थितमस्तीति तदेतेनात्र विवृतम् ॥ १० ॥

ननु पाद्मे—"अम्बरीषशुकप्रोक्तं नित्यं भागवतं शृणु" इत्युक्तलक्षणानन्वितत्वात्कथमष्टादशान्तर्गतमिति, यतः, शुकेन प्रोक्तमिति विग्रहेऽपि द्वितीयादीनां भागवतत्वे द्वादशस्कन्धात्मकत्वव्याघातः । देवीभागवतं तु—"व्यासेन कृत्वाऽथ शुभं पुराणं शुकाय पुत्राय च पाठितं वै" इत्युक्तेरस्ति लक्षणसमन्वय इत्यत आहुः—**अम्बरीषेत्यादि** । अम्बरीषशुकायेति प्रोक्तं पाठितमिति चतुर्थ्या समासस्याप्राप्तेः । बलिहितरक्षितग्रहणात्प्रकृतिविकृतिभाव एव प्रवृत्तेः । अत एव धर्माय नियमो धर्मनियम इति परस्पराभाष्ये शक्याभिप्राय इति कैय्यटः । अश्वघासादयस्तु षष्ठीसमास इत्याकरोऽपि मानम् । सुप्सुपा चतुर्थ्यादियोगविभागस्य क्लिष्टत्वात् । शुकेन प्रोक्तमिति तु कर्तृकरणयोः कृता बहुलमित्यनेनासन्दिग्धः । यत्तु, शुकेन प्रोक्तमित्यर्थे द्वितीयादीनां भागवतं स्यादित्युक्तम्, तदपि न ग्रन्थत्वेन विरोधात् । अन्यथा सर्वपुराणेषु सूतशौनकयोरेवोपक्रमसम्वादसत्त्वात्, ब्रह्मणाभिहितं मरीचये ब्राह्म नारायणेन नारदाय प्रोक्तं ब्रह्मवैवर्तमित्यादिरीत्या वर्णनमसमञ्जसं स्यात् । किञ्च, "स संहितां भागवतीं कृत्वाऽनुक्रम्य चात्मजम् । शुकमध्यापयामास निवृत्तिनिरतं मुनिः" इत्यनेन सर्वस्य भागवतत्वं चतुर्थीसमासपक्षेऽपि सङ्गतम् । परीक्षिच्छुकसम्वादो योऽसौ व्यासेन वर्णितः" इति स्कान्दात् । "परीक्षिच्छुकसम्वादः श्रीमद्भागवताभिधः" इति पद्मात् । "प्रह्लादनारदपराशरपुण्डरीकव्यासाम्बरीष" इति भक्तेषु गणितत्वात् । श्रीमद्भागवतमेवायाति ॥ ११ ॥

ननु "प्रौष्ठपद्या पौर्णमास्यां हेमसिंहसमन्वितम् । लिखित्वा तच्च यो दद्यादि" त्युक्त्या हेमसिंहसाहित्यं पौर्णमासी च तिथिश्च देवीभागवतमेव गमयति । यतो यद्दैवतपुराणदानेन तद्दैवतवाहनतिथ्योरुक्तत्वाद्यथा वाराहं हेमगरुडं मात्स्यं हेममत्स्ययुक्तमित्यत आहुः—**हेमसिंहेति** । अन्यत्र श्रीभागवतशङ्कानिरासवादे नामैकदेशे नामग्रहणमित्युक्तेः । यथा सत्यभामादिषु सत्येति भामेति

तन्नामिधानादित्यत्र किरातेऽपि, "हेमसिंहयुतं चेति वैष्णवाय ददाति यः । कृष्णेन सहसा युज्यन्स पुमान् लभते ध्रुवमि"ति पाद्ममाहात्म्यात् । "अष्टादशपलैः कुर्याद्धेमसिंहासनं प्रिये" इति सर्वपुराणचक्रवर्तित्वात्, हेमसिंहासनं, युक्तं ब्रह्मादिवाराहान्तानां वैशाख्यादिपौर्णमास्यो दानकालाः, तत्क्रमतो भाद्रमासस्य दानं विधीयते । न तु देवीतिथित्वेन शैववैष्णवादिष्वपि वृष-गरुडादिदानस्य शिवरात्रिजन्माष्टम्यादेरनुक्तेः । वैष्णवे धेनुदानोक्तेः । न तद्दैवतवाहनतिथ्यो-र्नियमः । ननु कोऽयं द्वेषः देव्या भागवतेन येन सर्वथैव खण्डनं क्रियते, तत्राहुः—यद्वी-त्यादि । आदित्यादिपुराणान्तरे गारुडपाद्मनारदस्कान्दवाराहब्रह्मवैवर्तमात्स्यभिन्ने शैवपुराणे । "भग-वत्यास्तु दुर्गायाश्चरितं यत्र विद्यते । तत्तु भागवतं प्रोक्तं न तु देवीपुराणकम्" इत्युक्तेरित्यादौ, तत्पक्षेऽपि नास्माकं क्षतिः । विष्णुमाहात्म्यस्य वेदसिद्धत्वात् । तच्च श्रीपुरुषोत्तमैः प्रहस्ताख्ये वादे विविक्तम् । परन्तु, देवीभागवते—"इदमखिलकथानां सारभूतं पुराणं निखिलागमतुल्यं सप्रमाणा-नुविद्धम् । पठति परमभावात् यः शृणोतीति ज्ञात्वा स भवति धनवान्वै ज्ञानवान्मानवोऽत्रे"त्युक्तेः । षष्ठस्कन्धादग्रे प्रकरणभङ्गः सम्वादभङ्गोऽभिमात्लभश्च कल्पितत्वमनुमापयतीति । अलम् । विशेष-जिज्ञासायां मातुलानां रामकृष्णचरणानां विजयवाद एव द्रष्टव्यः । श्रीमद्भागवतमाहात्म्यप्रतिपाद-कानि वचनानि इहोपष्टम्भकानि कानिचिल्लिख्यन्ते । तत्र नारदीये ब्रह्मादीनामनुक्रमण्यध्याये, "मरीचे शृणु वक्ष्यामि वेदव्यासेन यत्कृतम् । श्रीमद्भागवतं नाम्ना पुराणं वेदसम्मितम् । तदष्टा-दशसाहस्रं कीर्तितं पापनाशनम् । सुरपादपरूपोऽयं स्कन्धैर्द्वादशभिर्युतः ॥ भगवानेव विप्रेन्द्र विश्वरूपी समाहितः । तत्र तु प्रथमस्कन्धे सूतर्षीणां च सङ्गमे । व्यासस्य चरितं पुण्यं पाण्ड-वाना तथैव च" इत्यादि । गारुडे—"अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः । गायत्रीभाष्य-रूपोऽसौ श्रीमद्भागवताभिधः । पुराणानां सारभूतः साक्षाद्भगवतोदितः" इति । पाद्मे—"ग्रन्थोऽष्टा-दशसाहस्रो द्वादशस्कन्धसंयुतः । परीक्षिच्छुकसम्वादः श्रीमद्भागवताभिधः ॥ पुराणेषु च सर्वत्र श्रीमद्भागवतं परम् । यत्र प्रतिपदं विष्णुर्गीयते बहुधर्षिभिः ॥ इति सङ्कल्प्य मनसा श्रीमद्भागव-ताभिधम् । जन्माद्यस्य यतश्चेति धीमद्ग्रन्तमुपावदत्" ॥ अन्यत्र च स्कान्दमाहात्म्ये—"यद्वै भागवतं शास्त्रं भगवद्रूपमुच्यते । पादादिजानुपर्यन्तं प्रथमस्कन्ध उच्यते" इत्यादिना "द्वादशं सूत्तमाङ्गं "स्यादाश्रयं सुनिरूपितमि"ति । तेन निरोधो द्वादशार्थ इति प्रत्युक्तम् । स्कन्दपुराणे भागवतमा-हात्म्ये—"कृतकृत्या वयं सर्वे हरिभक्तेः प्रदर्शनात् । श्रीभागवतमाहात्म्यकथायाः समुदीरणात्" इत्यादीनि तानि बोध्यानि । या तु देवीमाहात्म्यप्रतिपादनपूर्वकं तन्निन्दकाना निन्दा तदीयवचनैरेव दर्शिता, सा तु न वैदिकानां सम्मता, वेदे तु पुरुषाराधनमेवोपलभ्यते काण्डत्रये । न तु महा-काल्याद्यर्चनं मकारपञ्चकस्यातिनिषिद्धस्य श्रुतिस्मृतिपुराणेषु महापातकेषु गणनात् । तेषां मते "पीत्वा पीत्वा पुनः पीत्वा यावत्पतति भूतले । उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते ॥ पेये चापेयता बुद्धिः पापशङ्का च मैथुने । भक्ष्ये चाभक्ष्यता बुद्धिः कथं देवीं समर्चयेत्" इत्यादिकौलाचारप्रकरणे तन्त्रसारोदितवचनानां कथनाद्धेयलाभादिदमपि सूचकत्यापि तद्ग-

भागवतस्य दाने हेमसिंहदानस्य साहित्यं पुराणान्तरेऽभवेद्भवतु को, विरोधो नः, विष्णोः, सर्वाधिवाक्यं तु ग्रहस्तादिग्रन्थेषु व्यक्तम्। देवीभागवतं तु पट्स्कन्धात्मकमेव प्राक् प्रसिद्धं तदग्रिमस्य प्राचीनपुस्तकेष्वलाभादतो द्वादशस्कन्धत्वासिद्धेः प्रकृतवचसामविषय इत्यलम्॥ १२॥

---

वेदिति भयान्नातिप्रकाशितम्। "स्वशाक्तत्वं गोपयन्तः श्रोत्रनासादिहीनवत्" इत्युपमन्युवचनं प्रत्युत बाधकं शाक्तत्वं निषिद्धाचरणरूपं गोपयन्तः स्वयं तन्मार्गप्रवृत्ता भूत्वा ये, तेषामेषा निन्दा न तु वैदिकानाम्। "अन्तः शाक्ता बहिः शैवा" इत्यादि रूपा हि ते। न च, दक्षिणमार्गप्रशंसावचनानि मया लिखितानि "दक्षिणादुत्तमं वामं वामात्सिद्धान्तमुच्यते। सिद्धान्तात्तु परं कौलं कौलात्परतरं नहि" इति तत्सम्मतवाक्ये तत्पदवीमारुरुक्षतां तादृशत्वमेव वैदिकाचारपराङ्मुखत्वस्य तेषां भूषणत्वात्। "वैदिका पशवः प्रोक्ता दीक्षाहीनो नरः पशुः" इत्युक्तेः। "अलिपिशितपुरन्ध्री भोगपूजारतोऽहं बहुविधकुलमारम्भसम्भावितोऽहम्। गुरुचरणरतोऽहं भैरवीमाश्रितोऽहं पशुजनविमुखोऽहं भैरवोऽहं शिवोऽहम्" इत्युक्तेः। न चोपन्यस्तवचनेषु तयात्वं न व्यन्यत इति वाच्यम्। "समयाचारविज्ञानविभागज्ञानवर्जिताः" इति तल्लिखितवाक्ये त्वस्य स्फुटत्वात्। तथाहि शाक्तानां समयाचारतन्त्रे—

"यानि कानि च शास्त्राणि कथितान्यागमस्य च। तानि तानि च कथ्यन्ते समयाचारणानि वै॥ १॥
आचारः कथितस्तेषु मयाप्याचरितः स च। तस्याचारस्य नाम्नापि कुलाचारः प्रकीर्तितः॥ २॥
आचारो द्विविधो तत्र वामदक्षिणभेदतः। पञ्चमुद्रादिसहितो वामाचारः प्रकीर्तितः॥ ३॥
पञ्चमुद्रादिरहितो दक्षिणाचार उच्यते। पूजाद्रव्यं प्रवक्ष्यामि पूजकाभीष्टसिद्धये॥ ४॥
मद्यं मांसं तथा मत्स्यं मुद्रा मैथुनमेव च। मकाराः पञ्च सुभगे कर्मणां शान्तहेतवे॥ ५॥
या सुरा सर्वतन्त्रेषु कथिता दिवि दुर्लभा। तस्या नाम भवेद्देवि तीर्थं सज्ज्ञानमुक्तिदम्॥ ६॥
पशूनां भक्ष्ययोग्यानां मांसं देवि विनिर्मितम्। देवीतन्त्रेषु विधिवत्तस्योक्तिः शुद्धिरुच्यते॥ ७॥
मांसस्य भक्ष्ये ये मत्स्याः कथिता रुधिरोज्झिताः। ते रहस्ये मया प्रोक्ता मीनाः सिद्धिप्रदायकाः॥ ८॥
गुडादिमध्ये निक्षिप्य कुर्वन्ति द्युतिवर्द्धिनीम्। मुद्रां तां विबुधाः प्राहुः चणकादींश्च भर्जितान्॥ ९॥
या रोटिका पोलिका च सापि मुद्रा प्रकीर्तिता। भगलिङ्गस्य योगेन मैथुनं यद्भवेत्प्रिये॥ १०॥
तस्य यन्नाम भवेत्पञ्चमं परिकीर्तितम्। पञ्चमे देवि सर्वेषां मम प्राणो भवेत्प्रिये॥ ११॥
पञ्चमेन विना देवि चण्डीमन्त्रं वृथा जपेत्। यदि सर्वमकारेषु भ्रान्तिं च कुरुते प्रिये॥ १२॥
तस्य सिद्धिः कथं देवि शक्तिमन्त्रं जपेत्कथम्। पञ्चमेन विना देवि भुक्तिर्मुक्तिः कथं भवेत्॥ १३॥
पञ्चमेन नृणां देवि यदानन्दो भवेद्ध्रुवम्। तन्नाम मोक्षं विदुषामबुधानां च पातकम्॥ १४॥
आनन्दः परमं ब्रह्म मकारास्तस्य सूचकाः। विशेषतोऽत्र देवेशि पञ्चमे परमं पदम्॥ १५॥
भगस्य स्मरणे पुण्यं भगस्य दर्शने तथा। भगस्य पूजने पुण्यं भगस्य मैथुने महत्॥ १६॥

भगस्य पञ्चमे देवि यत्सुखं मम जायते । न तत्सुखं जपैर्होमैर्न दानैस्तपसा तथा ॥ १७ ॥
अवश्यं पञ्चमे कुर्याच्छक्तिमात्रे महेश्वरि । पञ्चमस्य कृते पुण्यं फलमक्षयतां व्रजेत् ॥ १८ ॥
स्नानार्थं देवतानां च रहस्यं परमं शृणु । येन स्नानेन देवेशि देवता सुप्रसीदति ॥ १९ ॥
स्त्रियो रजश्च प्रथमं यस्मिन्वयसि जायते । गृह्णीयाच्चाशु सुभगे ब्रह्मादीनां च दुर्लभम् ॥ २० ॥
स्वयम्भूकुसुमं नाम देवतानां च प्रीतये । ततः स्वदेवतानां च प्रकुर्यात्स्नानमुत्तमम् ॥ २१ ॥
वाञ्छितं लभते देवि सत्यं सत्यं वरानने । जीवति भर्तरि स्त्रीणां मैथुनं कारयेत्परैः ॥ २२ ॥
तस्या भगस्य यद्द्रव्यं कुण्डद्रव्यं प्रकीर्तितम् । विधवा मैथुनाज्जातं गोलद्रव्यं महोत्तमम् ॥ २३ ॥
कुण्डगोलोद्भवद्रव्यं षडाम्नायेषु चोत्तमम् ।" इति एवम्विधाः समयाचादर्शितास्तेषां च वैदिकागमबाह्यत्वमेव । वैदिकशास्त्रे तु "वेदोऽखिलो धर्ममूलम्" इति मनुवचनतद्विरुद्धार्थानां पाषण्डत्वमेव । तदुक्तम्, "न वेदबाह्ये पुरुषे पुण्यलेशोऽपि शङ्कर । सङ्गच्छति महादेव धर्मो वेदाद्विनिर्बभौ"इत्युक्त्वाग्रे—"कपालं भाङ्गलं शाक्तं भैरवं पूर्वपश्चिमम् । पञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ॥ सृष्ट्वा तान् चतुर्वेदो(?)कुर्वाणः शास्त्रचोदितम् । पतन्ति नरके घोरे बहुकालात्पुनः पुन"रिति कूर्मे गौतमशप्तमुनिप्रक्रमे हरिहराभ्यां मोहशास्त्राणि कृतानीत्युच्यते । वाराहे रुद्रगीतायां "यद्वेदबाह्यं कर्मस्याच्छास्त्रमुद्दिश्य पठ्यते । तद्दुर्गतिपदं नृणामिह लोके परत्र च ॥ सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम्" इत्यादि कृतादिषु विष्णुपूजनं निरूप्य "कलौ मत्कृतमार्गेण बहुरूपेण तामसैः । ईर्ष्यते द्वेषबुद्ध्या च परमात्मा जनार्दनः" । ततो ब्रह्मविष्णुरुद्राणामभेदं बोधयित्वा "कथं सृष्टिर्भविता नरकेषु च को वसेत्" इति प्रकरणे युगत्रये मुक्तिरुक्ता । कलौ विरलानामेव सेत्स्यर्थे त्वं च रुद्रेति मोहनार्थं रुद्रस्यागमशास्त्रकरणम् । तत्र "वेदमार्गविनिर्मुक्तास्तेषां मोहार्थमेव च । तपःसिद्धान्तसञ्ज्ञाभिर्मया शास्त्रं तु दर्शितम्" इत्युपमंहृतमागममार्गीयानामेव निषिद्धमुच्यते । शाक्तानां तु तत्र किं वाच्यम् । न च पञ्चरात्रस्य वैष्णवाभिमतस्याप्यागमत्वम् तेन वैष्णवानां निन्दाऽऽगता इति वाच्यम् । तत्र भारते वैष्णवागमानां प्रशंसाश्रुतेर्न दोषः । तथाहि, मोक्षधर्मे "साङ्ख्ययोगः पञ्चरात्रं वेदारण्यकमेव चे"त्यादिप्रकरणे—"पञ्चरात्रविदो ये तु यथाक्रमपरायणाः । एकान्तभावोपगतास्ते हरिं प्रविशन्ति हि" इति पठ्यते । तत्रायं भावः । वामागमे तु निषिद्धाचरणस्यैव सत्त्वान्निन्द्यत्वम् । पञ्चरात्रे तु निषिद्धाचाररूपनिन्दाबीजाभावात् । अत एव अपरार्के बौद्धायनः—"नग्नान्पाशुपतान्बौद्धान्कापालान्कौलान्दिशश्चरान् । एतान्दृष्ट्वाऽपां स्पर्शः स्पृष्ट्वा स्नानं समाचरेत्" इत्युक्तम् । तस्मान्निषिद्धाचारवत्त्वेन तेषां निषिद्धत्वम् । ननु वैदिकमते तेषां निन्दा, तेषां मते वैदिकानामिति तुल्य एव दोषः, इति चेद्दृष्टोऽसि वेदमन्तरा तेषां निर्वाहाभावात् । "कृत्वा तु वैदिकं कर्म ततस्ताम्रिक्रमाचरेत्" इत्युक्तेः । य एवमपि न मनुते तदा तु जैनादितुल्यतापत्त्या न विवादास्पदमित्यलम् ॥

## दुष्टाः प्राहुरनार्षमार्षमपरे शिष्टाः पुराणोत्तमं

उक्तार्थरहस्यं दर्शयन्तः शिष्टाचारप्राप्तं ग्रन्थपर्यवसाने मङ्गलमवतारयन्ति **दुष्टा** इति । तत्र जीवा द्विविधा दैवासुरभेदात् । "द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च । दैवो विस्तरतः प्रोक्त आसुरं पार्थ मे शृणु" इति भगवदुक्तेः । तत्रासुरा मरणजन्मरूपे भवप्रवाहे पतिताः प्रावाहिकास्ते च स्वभावतो दुष्टाः शिष्टानां भागवतपरायणानामुत्कर्षमसहमानाः पुराणान्तरेभ्यो विचक्षणलक्षणं श्रीमद्भागवतं कथयन्तोऽनार्षमिदमिति वदन्ति । निष्कारणपरद्रोहोत्साहवत्त्वम्, तत्त्वम् । ते च काशीनाथादय एव । यतः, सर्वसम्मते श्रीमद्भागवते कुचोद्यं कुर्वन्ति । ननु देवीभागवतं खण्डयन्तो भवन्तोऽपि तादृशा इति चेन्न; प्रथमं निष्कारणं तैरेवतिरस्कृता लोका इति । नतु जिघृक्षया द्रुह्यामहे । तथाहि । अष्टादशपुराणेभ्योऽस्य पुराणस्य विलक्षणा गद्यपद्यमयी भारती भासतेतराम् । अत इदं व्यासकृतपुराणपदवीं नारोढुमर्हति इत्याहुः । अपरे शिष्टा आर्षमाहुः । यदि किंलक्षणा गद्यपद्यमयी भारती भवादृक्देवानांप्रियानवगाह्याऽऽर्षपदवीं नाधिगच्छेत्तर्हि बहूनां स्तोत्रपाठानां विचित्रकवितात्वेन पुष्करप्रादुर्भावादीनां चातिकठिनत्वेन तत्त्वं कथं भवेत्? किञ्च, यदि शास्त्रार्थगाम्भीर्येण ब्रूषे? तर्हि गीता सप्तशत्यादिसकाशात्, भागवते किं गाम्भीर्याद्याधिक्यं येनानार्षत्वं सम्भवेत् । यदि नैवं पुराणान्तरमिति वदन्ति । तर्हि सर्वथैवैतादृशं विष्णुपुराणमिति तदपलापाभावे कथमस्यापलापः ।" तत एव कमलाकरादयो शिष्टा निबन्धेषु प्रमाणयन्ति । किञ्च, यदि देवीभागवतं प्रमाणं चेत्तर्हि स्मार्तास्तं लिखेयुः । किञ्च गङ्गेशेन देवीभक्तेनापि देवीभागवत्त्वेन देवीपुराणमेव लिखितं तत्रोक्तमेव । यदि भास्करेण लिखितमिति भवान्प्रतिपद्येत, तर्हि शृणु, भास्करस्य वाममार्गीयत्वेनाशिष्टत्वं प्रसिद्धम् । तस्य तत्राग्रहवादाच्च उक्तार्थेऽप्रामाण्यम् । यदि दिनकरसम्मत्या गृह्यते । तर्हि, दिनकरेण गायत्रीछन्दसारम्भ इति पाठः पठितः स च न शिष्टसम्मतः । अतोऽस्याप्याग्रहवादान्न सम्मतिः सिद्ध्यतीति दिक् । शिष्टैस्तु पुराणेषु पुराणगणनायां भागवतद्वयं गणितं तत्रापि व्यवस्थामाहुः—पुराणोपपुराणयोर्गणनक्रमनियतम् । यथा मत्स्यपुराणे पुराणगणनायां शैवपुराणं नोक्तं पाद्मोत्तरखण्डे शैवमुक्तं शैवपुराणे वायुपुराणं नोक्तं, आदित्येऽपि शैवं नोक्तम् । एवं च भागवतद्वयश्रवणं कस्मिंश्चित्पुराणे महापुराणगणनायां कस्मिंश्चित्पुराणे उपपुराणगणनायाम् । यद्वाऽऽदित्यपुराणदेवीपुराणकालीपुराणानामपि तत्र भागवतत्वश्रवणात्तदुक्तिः । न तु देवीभागवतस्वीकारेण तस्य प्राचीनेष्वप्रसिद्धेः दौर्गं भागवतं देवीभागवतं मूलं भागवतमिति श्रवणमपि तात्पर्यम्, तत्परतयैव योज्यम् । प्रतिपदोक्तत्वादेतत्परमित्यपि कश्चितत्सिद्धावपि नास्माकं क्षतिरित्युक्तमेव । स्कान्दपाद्मनारदीयब्रह्मवैवर्तविष्णुशिववाय्वादीनां महापुराणेषु गणितानामपि पुराणोपपुराणयोः उपपुराणेषु गणनं दृश्यत एवेति न कश्चिच्छङ्काकलङ्कः । अपरे इत्यनेन दैवा जीवा उक्ताः । दैवासुरविभागयोर्भगवता दैवानां पूर्वमेव निरूपणात् । तल्लक्षणं तु "अभयं सत्त्वसंशुद्धि"रित्यादिना दर्शितम् । परद्रोहादिशून्यत्वे सति सात्त्विककर्मज्ञानयोगादिव्यवस्थितत्वं तत्र फलति । तेऽपि

श्रीमद्भागवतं हरेस्तनुरवेर्बिम्बं पुराणैः स्तुतं
पापध्वान्तनिवारणं भयहरं छद्मसमुद्घाटकम् ।
तस्मिन्मत्सरिणो क्षुद्रकशिशवो जल्पन्ति किं तेन हि
प्रत्यक्षं न प्रमाणयन्ति सुहृदो ये राजहंसाः द्विजा ॥ १ ॥

प्रक्षिप्तस्तस्य चपेटिकायाः स्याद्दुर्जनानां मुखभञ्जनाय ।
ततो मयैषा रचिता प्रहस्तिका सिद्धिर्यतोऽस्यां मुनिवाग्बलेन ॥ २ ॥
शास्त्रिगङ्गाधरकृतः कृष्णगोविन्दशर्मणः ।
लेखे यत्स्खलितं तत्तु सन्तः संशोधयन्तु मे ॥ ३ ॥

इति सर्वशास्त्रसम्पन्नशास्त्रिगङ्गाधरभट्टात्मजकन्हैयालालविरचिता
दुर्जनमुखचपेटिकाऽन्याख्या प्रहस्तिका समाप्ता ॥



श्रीकृष्णाय नमः

श्रीमद्दामोदरविरचितः

# श्रीमद्भागवतनिर्णयसिद्धान्तः

यस्यैव नेत्ररसविधे घनवारिवाहः
किं तेन वा सपदि तीक्ष्णकरश्च पश्येत् ।
भानुश्चराचरविकाशकरः प्रदीप्तो
त्यक्त्वा त्वमेव परिराजति अभ्रमध्ये ॥ १ ॥
दुष्कर्म्मजन्मदुरितोघयजातपीडा-
सन्तप्तरासनतया यदि पाऽमृतस्य ।
नाऽऽस्वाद्यते मधुरता नहि तन्मृदुत्व-
मास्वादहीनरसनस्य पुनर्विडम्बः ॥ २ ॥
सर्प्पः सदा दशति चेत्मलयेशदेहं
शम्भोर्न तेन मरणं भविता कदाचित् ।
सोऽसौ समश्चिरतरं पुनरेव सर्प्पा-
दन्तप्रपातजननव्रणघातनेन ॥ ३ ॥
तद्वत्सुधासमसुनिर्म्मलनित्यसत्त्वः
रत्नाकरोऽहमिह भागवताख्य एव ।
सुप्तेन सूर्यशतकाचिरकालतोऽपि
खद्योतदीपनमथाधिकमस्य कुर्यात् ॥ ४ ॥
तथापि व्यासरचितं श्रीमद्भागवतामृतम् ।
एतदुन्नाव्यतेऽस्माभिरज्ञानं व्याधिशान्तये ॥ ५ ॥
मोहान्धकारान्धतमा जना ये
करैर्हरिश्चन्द्रकलानिधिस्तु ।
प्रमील्य नेत्रे परमार्थरूपं
पश्यन्तु ते भागवताख्यरत्नम् ॥ ६ ॥

व्यासकृताष्टादशपुराणपरिगणनपरेषु "ब्राह्मं पाद्मं वैष्णवं च" इत्यादिषु पुराणवाक्येषु भागवतं नाम पुराणमेकमेव परिगणितम् । लोके तु श्रीमद्भागवतदेवीभागवताख्यौ द्वौ प्रसिद्धौ, तत्र कतरो व्यासकृताष्टादशपुराणान्तर्गत इति जिज्ञासायां श्रीमद्भागवताख्य एव तथेति पुराणान्तरवचनैर्निर्णीयते । स्कान्दे श्रीमद्भागवतमाहात्म्ये "परीक्षिच्छुकसम्वादो योऽसौ व्यासेन वर्णितः । ग्रन्थोऽष्टादशसाहस्रः सोऽसौ भागवताभिधः" इत्युक्त्या, "मरीचे शृणु वक्ष्यामि वेदव्यासेन यत्कृतम् । श्रीमद्भागवतं नाम पुराणं वेदसम्मितम्" इति नारदीयोक्त्या, "चकार संहितामेतां श्रीमद्भागवतीं पराम्" इति वक्ष्यमाणपाद्मोक्त्या च श्रीमद्भागवतस्य व्यासकृतत्वं स्पष्टमुक्तम्, व्यासकृतत्वादेव चाष्टादशान्तर्गतत्वं सिध्यति, व्यासकृतानाम् "अष्टादशपुराणानां कर्ता सत्यवतीसुतः" इत्यादिवचनसिद्धत्वात्, अष्टादशव्यतिरिक्तानामुपपुराणत्वेन व्यासान्यकर्तृकत्वस्यान्यान्युपपुराणानि मुनिभिः कृतानि "अष्टादशपुराणानि श्रुत्वा संक्षेपतो द्विजाः" इति कौर्म्मोक्त्या, "अन्यान्युपपुराणानि कथितानि महर्षिभिः । अष्टादशपुराणानि श्रुत्वा संक्षेपतो द्विजाः" इति स्कन्दसौरसंहितोक्त्या,

एवमाज्ञापितास्तेन शिवेन मुनयः पुरा।
श्रुत्वा सत्यवतीसूनोः पुराणं सकलं मुदा॥
अन्यान्यपि पुराणानि चक्रुः सारतराणि वै।

इति पराशरोक्त्या च सिद्धत्वाच्च। न च "स्कन्धा द्वादश एवात्र कृष्णेन मुनिना कृता" इति देवीभागवतोक्त्या, देवीभागवतस्यापि व्यासकृतत्वमिति वाच्यम्, द्वयोर्भागवतयोर्व्यासकृतत्वे व्यासकृतपुराणानामष्टादशत्वचतुर्लक्षश्लोकत्वयोर्हानिप्रसङ्गात्, द्वयोरेकस्याष्टादशन्यतिरिक्तव्यासान्यकृतत्वहानिप्रसङ्गाच्च। नचैवं देवीभागवतवचनाप्रामाण्यप्रसङ्गः, तस्य शिष्यद्वारा व्यासकृतत्वमित्याद्यर्थान्तरपरताया एवागत्या स्वीकार्यत्वात्॥

न च देवीभागवतवचनमुख्यार्थानुरोधेन श्रीमद्भागवतव्यासकृतत्ववचनान्येवार्थान्तरपरतया नीयन्तामिति वाच्यम्, एकानुरोधेन बहूनामन्यथा नयनस्याप्यन्याय्यत्वेनैकस्य देवीभागवतवचनस्यैव पुराणान्तरसहायहीनस्योक्तस्कान्दादिवचनसहायेन श्रीमद्भागवतव्यासकृतत्वेन बोधकेन भारतोत्तरमसन्तुष्टो व्यासो भागवतं चकारेत्यादिश्रीमद्भागवतवचनेनाविरुद्धत्वायाऽर्थान्तरपरत्वेन नेतुमुचितत्वात्। किञ्च, पाद्मे श्रीमद्भागवतमाहात्म्ये श्रीमद्भागवतकथाश्रवणाय समागतानां परिगणनप्रसङ्गे "वेदान्तानि च वेदाश्च मन्त्रास्तन्त्राणि संहिताः। दशसप्तपुराणानि षट्सहस्राणि तदा ययुरि"त्युक्तम्। तत्र व्यासकृतपुराणानामष्टादशत्वादष्टादशेति वक्तव्ये सप्तदशत्वोक्तिः, श्रोतव्यस्य श्रीमद्भागवतस्याष्टादशत्वं गमयति, तस्याष्टादशानन्तरगतत्वे देवीभागवतस्याष्टादशान्तर्गतत्वे चाष्टादशानां श्रोतृत्वसम्भवेन श्रोतुमागतानां पुराणानामष्टादशत्वानुक्तेर्निर्बीजत्वप्रसङ्गात्।

एवं पाद्मे "दशसप्तपुराणानि कृत्वा सत्यवतीसुतः। नाप्तवान् मनसस्तोषं भारतेनापि भामिनि। चकार संहितामेतां *श्रीमद्भागवतीं परामि*"ति सप्तदशत्वोक्तिरपि *श्रीमद्भागवतस्यैवैतां* संहितामिति निर्दिष्टस्याष्टादशत्वं गमयति। देवीभागवतस्याष्टादशत्वेऽष्टादशपुराणानीत्युक्तेर्निर्बीजत्वप्रसङ्गात्। किञ्च, नारदीये ब्राह्मादीन्यष्टादशपुराणानि प्रदर्श्य क्रमेण तेषामनुक्रमणिका दर्शिता तत्र—

विरिञ्चे शृणु, वक्ष्यामि वेदव्यासेन यत्कृतम्।
श्रीमद्भागवतं नाम पुराणं वेदसम्मितम्॥
तदष्टादशसाहस्रं कीर्तितं पापनाशनम्।
सुरपादपरूपोऽयं स्कन्धैर्द्वादशभिर्युतः॥
भगवानेव विप्रेन्द्र विश्वरूपी समाहितः।
तत्र तु प्रथमे स्कन्धे सूतर्षीणां समागमे॥
व्यासस्य चरितं पुण्यं पाण्डवानां तथैव च॥

इत्यादिना द्वादशानां स्कन्धानामनुक्रमणिका प्रोक्ता, तस्याश्च श्रीमद्भागवत एवोपलभ्यमानत्वात्तस्यैवाष्टादशत्वं गमयति, न तु देवीभागवतस्य तत्र तस्यानुपलम्भात्।

किञ्च,

"वैष्णवं नारदीयं च तथा भागवतं शुभम्।

गारुडं च तथा पाद्मं वाराहं शुभदर्शने ॥
सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै ।

इत्युक्त्या,

सत्त्वाधमे मात्स्यकौर्म्ये समाहुर्वायुं चाहुः सात्त्विकं मध्यमं च
विष्णोः पुराणं सत्त्वोत्तमे गारुडं चाहुरार्याः"—

इति गारुडोक्त्या च भागवतस्य सात्त्विकपुराणत्वमुक्तम्। अन्यानि विष्णोः प्रतिपादकानि सर्वाणि तानि सात्त्विकानि इति चाहुरिति गारुडोक्त्या, "सात्त्विकेषु पुराणेषु माहात्म्यमधिकं हरेरि"ति कौर्म्योक्त्या च सात्त्विकपुराणानां विष्णुपरत्वमुक्तमतो विष्णुपरमेव भागवतमष्टादशान्तर्गतं न तु देवीभागवतम्। किञ्च, स्कान्दे प्रभासखण्डे "चतुर्भिर्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः। अष्टादशपुराणेषु शेषेषु भगवान् शिव" इत्युक्तम्। स्कान्दे सौरसंहितायां च "कथ्यते दशभिर्विप्राः पुराणैः परमेश्वरः। चतुर्भिर्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा प्रकीर्तितः॥ एकेनाग्निस्तथैकेन भगवांश्चण्डभास्करः" इत्युक्तम्। ततोऽपि विष्णुपरमेव सात्त्विकोत्तमं, भागवतमष्टादशान्तर्गतं न तु देवीभागवतमिति निश्चीयते ॥

अत्र प्रत्यवतिष्ठमाना देवीभागवतपक्षपातिनो यदाहुः—श्रीमद्भागवतं न पुराणम् दशलक्षणत्वात्, पुराणानां पञ्चलक्षणत्वनियमादिति, तन्न; ब्रह्मवैवर्ते कृष्णखण्डे चरमाध्याये—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम्।
एतदल्पपुराणानां लक्षणं च विदुर्बुधाः।
महतां च पुराणानां लक्षणं कथयामि ते।
दशाधिकं लक्षणं च महतां परिकीर्तितम्" ॥

इति वचनेन दशलक्षणस्यापि पुराणत्वसिद्धेः। उक्तं चैतच्छ्रीभागवते—"दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः। केचित्पञ्चविधं ब्रह्मन्महदल्पव्यवस्थये"ति। यच्चाहुः—श्रीमद्भागवते नारद उवाच- "कृतवान्भारतं यस्त्वमि"त्यादिना भारतोत्तरमसन्तुष्टो व्यासः श्रीमद्भागवतं चकारेत्युक्त्या श्रीमद्भागवतस्य भारतोत्तरत्वं प्रतीयते, तच्च श्रीमद्भागवतस्याष्टादशान्तर्गतत्वे—

अष्टादशपुराणानि कृत्वा सत्यवतीसुतः।
भारताख्यानमखिलं चक्रे तदुपबृंहितम् ॥

इति मात्स्यवचनेन भारतपूर्वकबोधकेन विरुध्यते। अतो न श्रीमद्भागवतमष्टादशान्तर्गतमिति। तन्न, देवीभागवते तृतीयस्कन्धे—

"वेदशाखापुराणानि वेदान्तं भारतं तथा।"
कृत्वा सम्मोहसम्मूढ"

इत्यादिना भारतोत्तरं सम्मूढो व्यासो देवीमाहात्म्यं ज्ञातवानित्युक्त्या देवीभागवतस्यापि भारतोत्तरत्वं प्रतीयते। तच्च देवीभागवतस्याष्टादशान्तर्गतत्वपक्षेऽप्युक्तमात्स्यवाक्येन विरुध्यते इति स्वपक्षेऽपि दोषस्तुल्य एव। यदि चोक्तं मात्स्यवचनं पुराणानि चतुर्लक्षाणि भारतमेकलक्षं

इति मात्स्योक्तं सारस्वतकल्पात्मकं भागवतम्। तस्य लक्षणं श्रीमद्भागवते नास्ति, तत्र सारस्वतकल्पानुक्तेरतो न तदष्टादशान्तर्गतमिति। तन्न। यतो मात्सीयं सारस्वतकल्पवाक्यं न भागवतलक्षणपरत्वे "यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च वशिष्ठायाग्निना प्रोक्तमाग्नेयं तत्प्रचक्षते" इत्यादिमात्सीयकल्पान्तवाक्यानामपि लक्षणपरत्वस्य वक्तव्यत्वेनाग्नेयादेरपीशानादिकल्पोक्तिविधुरस्याष्टादशबहिर्भावप्रसङ्गात्। किन्तु, मात्सीयकल्पवर्णनाध्यायस्थसङ्कीर्णसात्त्विकराजसतामसकल्पभेदवाक्यवदिमानि पुराणवर्णनाध्यायस्थानि सारस्वतादिकल्पभेदवाक्यान्यपि परस्परविरुद्धवृत्तान्तादिनां पुराणवचनानामप्रामाण्यनिरासाय भिन्नभिन्नकल्पवृत्तान्तविषयत्वप्रतिपादनपराण्येव। एवं सति मात्स्यवाक्यैरेव पुराणानां यथोक्तलक्षणादिमानसिद्धभागवतत्वादिविशेषणानां प्रति नियतकल्पसम्बन्धस्य विधित्सितस्य प्रतीतिनिर्वाहान्न भागवतादौ सारस्वतकल्पोक्त्यपेक्षास्ति। यच्चाहुः—"द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखा" इत्यादि पद्मोक्त्या भागवतस्य द्वात्रिंशदधिकं शतत्रयसङ्ख्या अध्यायाः प्रतीयन्ते। व्याख्यातास्तु श्रीधरस्वामिभिस्ते त्र्यधिका। अतो न श्रीमद्भागवतमष्टादशान्तर्गतमिति। तन्न। अघासुरकथात्मकाध्यायत्रयस्य प्रक्षिप्तत्वेन श्रीमद्भागवतान्तर्गतत्वासिद्धेरितिमध्ववल्लभाचार्यादयः। "ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः। पञ्चत्रिंशोत्तराध्यायत्रिशती युक्त ईश्वरी"—तिगौरीतन्त्रवचनप्रामाण्यात्पञ्चाशदधिकशतत्रयसङ्ख्यापक्षोऽपि प्रमाणवानित्यन्ये। यच्चाहुः—

हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा। गायत्र्या च समारम्भस्तद्वै भागवतं विदुः॥

इति श्रीधरस्वामिलिखितपुराणवचनोक्त्या हयग्रीवब्रह्मविद्या श्रीमद्भागवते नास्तीति। तन्न। यतः श्रीमद्भागवते षष्ठस्कन्धे अश्वशिरा दध्यङ्ङाथर्वणो नारायणवर्मोपदिदेशेत्युक्तम्। तत्र दध्यङ्ङाथर्वण एव हयग्रीवोऽश्वशिरस्त्वात्, नारायणवर्मैव ब्रह्मविद्या, नारायणस्य ब्रह्मत्वात्। यद्वा, पञ्चमस्कन्धे "भद्राश्ववर्षे साक्षाद्भागवतो वासुदेवस्य प्रियां तनुं धर्ममयीं हयशीर्षाभिधानां परमेण समाधिना सन्निधाप्येदमभिगृणन्नुपधावन्ति ॐ नमो भगवते धर्मायात्मविशोधनाय नम" इत्यादि गद्यवाक्येन हयग्रीवरूपस्य ब्रह्मणो मन्त्ररूपा विद्या दर्शिताऽस्ति। इयं विद्या देवीभागवतेऽप्यष्टमस्कन्धे प्रसिद्धा।

यच्चाहुः—अत एव भागवतनामान्यदिति नाशङ्कनीयमिति श्रीधरोक्त्या भागवतं नामान्यदिति पक्ष ऐतिह्यसिद्ध इति लभ्यते। ऐतिह्यसिद्धत्वादेवाद्यापि प्रसिद्धिमर्हतीति, तन्न, ऐतिह्यबाधकप्रमाणस्यात्त एवेत्युक्त्या दर्शितस्य जागरूकत्वे ऐतिह्यानुवृत्त्यनुपपत्तेः। यच्चाहुः—

'अम्बरीषशुकप्रोक्तं नित्यं भागवतं शृणु' इति पाद्मेऽम्बरीषं प्रति गौतमवचनेन शुकप्रोक्तत्वं भागवतविशेषणमुक्तम्। तच्च देवीभागवत एवास्ति, न श्रीमद्भागवते, यतः प्रोक्तमित्यस्य पाठितमित्येवार्थः। प्रवचनशब्दस्याध्यापनार्थकत्वप्रसिद्धेः। पाठितं तु शुकाय व्यासेन देवीभागवतमेव, "व्यासेन कृत्वाऽथ शुभं पुराणं शुकाय पुत्राय महात्मने यत्। वैराग्ययोगाय च पाठितं वै विज्ञाय चैवारणिसम्भवाय" इति देवीभागवतोक्तेः। श्रीमद्भागवतं तु शुकमुखादरूपं न शुकाय शुकेन चाध्यापितम्, सम्वादस्याध्यापनत्वायोगादिति तन्न "ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंयुतः। परीक्षिच्छुकसम्वादः श्रीमद्भागवताभिधः॥ पुराणेषु तु सर्वेषु श्रीमद्भागवतं परम्। यत्र प्रतिपदं विष्णुर्गीयते बहुधर्षिभिः॥ इति सङ्कल्प्य मनसा श्रीमद्भागवताभिधम्। जन्माद्यस्य यतश्चेति

धीमहान्तमुपावदेद्'' इत्यादि पूर्वापरपाश्र्ववचने बोधितानां परीक्षिच्छुकसम्वादत्वादिविशेषणानां देवीभागवते कथमपि समन्वयासम्भवेनाम्बरीषशुकप्रोक्तमिति पाद्मवचनस्य देवीभागवतपरत्वायोगाच्छुकप्रोक्तत्वस्य च शुकाय शुकेन वा प्रोक्तत्वरूपस्य शुकमध्यापयामास निवृत्तिनिरतं मुनिः । स तमध्यापयामास महाराजं परिक्षितमि"ति श्रीमद्भागवतवचनेन श्रीमद्भागवतेऽपि सम्भवात् । यदाहुः—

"लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।
प्रोष्ठपद्यां पौर्णमास्यां स याति परमां गतिम्'' ॥

इति मात्स्यवचनोक्तेः । सिंहो देव्या एव वाहनम्, न तु भगवतः वाहनं च यदस्य तदेव तदीयपुराणदाने दातव्यम्, पौर्णमासी च देव्या एव तिथिर्न भगवतः, अतः इदं मात्स्यवचनं देवीभागवतदानपरमेव न श्रीमद्भागवतदानपरमिति । तन्न, मात्स्यवैष्णवादिदाने मत्स्यधेन्वादेरावाहनस्यैव देयत्वेन वाहनमेव देयमिति नियमासिद्धेः । गौरीतन्त्रे श्रीमद्भागवतदानप्रस्तावे "अष्टादशपलैः कुर्याद्धेमसिंहासनं प्रिये" इत्युक्त्या सिंहपदेन आद्यत्वाच्च पौर्णमासी च देव्या एव नान्यस्येत्यत्र न किञ्चिन्मानमस्ति सर्वेषां पुराणानां प्रायेण पौर्णमास्यां देयत्वोक्तेः । यदाहुः—व्यासकृतग्रन्थान्तरेषु पदानि वाक्यानि च सुगमार्थानि, श्रीमद्भागवते तु दुर्गमार्थान्यतो न श्रीमद्भागवतं व्यासकृतमिति । तन्न, सर्वज्ञेन स्वतन्त्रेच्छेन व्यासेन सुगमस्येव दुर्गमस्यापि ग्रन्थस्य सुकरत्वेन दुर्गमत्वस्य व्यासकृतत्वाभावासाधकत्वात् । अन्यथा यत्र पदे वाक्ये वा तत्र मन्दमतेः क्लेशस्तस्य सर्वस्य व्यासकृतत्वाभावप्रसक्त्या भारतादौ पुष्करप्रादुर्भावादिग्रन्थस्य दुर्गमतरस्य नितरां व्यासकृतत्वाभावप्रसङ्गात् ।

यदाहुः—नन्वाशिवपुराणे उत्तरभागेऽष्टादशपुराणान्युक्त्वा तन्नामनिर्वचनप्रसङ्गे भगवत्याश्च दुर्गायाश्चरितं यत्र वर्तते, तत्तु भागवतं प्रोक्तम् । तच्च देवीभागवत एवास्ति न श्रीमद्भागवते इति । तन्न, श्रीमद्भागवतेऽपि दशमस्कन्धे भगवत्या दुर्गाया अवतारस्य वर्णितत्वेनोक्तविशेषणानपायात्, नह्युक्तवचनस्य यत्र दुर्गाचरितं प्राधान्येन वर्ण्यते तद्भागवतमित्यर्थः । उक्तवचने प्राधान्येनेति पदाध्याहारस्यावश्यकत्वासिद्धेः । न च दुर्गाचरितस्य भागवतासाधारणधर्मत्वाय प्राधान्येनेति पदमध्याहर्तव्यम् । अध्याहारोऽपि कालिकापुराणादिसाधारण्यपरिहाराद्, वृत्रासुरवधादिवद्दुर्गाचरितस्यासाधारणत्वानपेक्षायाः सुवचत्वाच्च । किञ्च, देवीपुराणकशब्देन कोऽर्थो विवक्षितः ? न तावत् देवीपुराणसञ्ज्ञो ग्रन्थविशेषस्तस्य गायत्र्यधिकारादिभागवतधर्मशून्यत्वेन भागवतत्वाप्रसक्त्या निषेधवैय्यर्थ्यात् । दुर्गाचरितवत्त्वमात्रेण प्रसक्त्यभ्युपगमे कालिकापुराणस्यापि प्रसक्तत्वेन निषेधार्हतया तदनिषेधस्य निर्बीजत्वप्रसङ्गात् । नापि देवीवर्णनं यत्रास्ति तदित्यर्थः । विधिनिषेधयोरेकविषयत्वप्रसङ्गात् । नापि यत्रान्यानुषङ्गितया देवी वर्ण्यते तदित्यर्थः । देवीभागवतमित्यत्रैव देवीपुराणमित्यत्रापि देव्याः प्राधान्यस्यैव प्रतीयमानत्वेनानुषङ्गितायाः शब्दत्वायोगात् । यदि च यत्र प्राधान्येन देवी वर्ण्यते, तदत्र देवीपुराणशब्दार्थ इत्युच्यते । तदा देवीभागवतस्य देवीपुराणत्वेन निषेधविषयस्य विधिविषयत्वानुपपत्त्या प्रासङ्गिकदुर्गाचरितवतः श्रीमद्भागवतस्यैव विधिविषयत्वं पर्यवस्यति, तस्माद्भागवतमेवाष्टादशान्तर्गतं न देवी भागवतमिति सिद्धम् ॥

श्रीमद्भागवतं येन पुराणार्णवशोधनात् । दामोदरेण रूपेण निर्णीतं तं हरिं नुमः ॥ १ ॥

इति श्रीदामोदरविरचितं श्रीमद्भागवतनिर्णयसिद्धान्तः समाप्तः ॥

तत्र, गङ्गेशोपाध्यायाः—**"नमस्कृत्य शिवां देवीं शर्वं भागवतं तथा। पुराणं सम्प्रवक्ष्यामि यथोक्तमृषिभिः पुरा"** इति देवीपुराणावयवे भागवतपदादेवीपुराणमेव भागवतमित्याहुः, तन्न रमणीयम्; **"यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः। वृत्रासुरवधोपेतं तद्भागवतमिष्यते" "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः। तद्वृत्तान्तोद्भवं चैतत्पुराणं परिकीर्तितम्"** इति मात्स्योक्तलक्षणस्य "ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः। हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा। गायत्र्या च समारम्भस्तद्वै भागवतं विदुः" इति स्कान्दोक्तलक्षणस्यासम्भवात्। देवीपुराणसमाप्तौ भागवतपदानुल्लेखाच्च। "सर्वार्थबोधकं शास्त्रं *ब्रह्मवक्त्रविनिःसृतम्। तेनापि नरशार्दूल कीर्तितं नरवाहनम्। ब्रह्मा दक्षप्रजापतये* शिवो ब्रह्मणे चोक्तवान्। लक्षमात्रेण लोकस्य विधा देवेन भाषिता" इति देवीपुराणस्याम्युदया[1]दसमाप्त्यध्यायवाक्ये लक्षसङ्ख्याकत्वेन देवीपुराणस्याष्टादशसहस्रसङ्ख्याविरोधाच्च। देवीपुराणस्य विजयत्रैलोक्याभ्युदयनिशुम्भशुम्भमथनाख्यपादत्रयविशिष्टत्वेन द्वादशस्कन्धसम्मितत्वरूपलक्षणस्याभावाच्च। "नमस्कृत्य शिवां देवीं शर्वं भागवतं तथा। पुराणं सम्प्रवक्ष्यामि यथोक्तमृषिभिः पुरा" इति वचने भागवतमिति पदस्य शर्वविशेषणत्वात्। **"वैष्णवानां यथा शम्भुः"** इति द्वादशस्कन्धवाक्यात्। "भस्मोद्धूलितदेहस्तु जटामण्डलमण्डितः। अहं ध्यायामि तं विष्णुं परमात्मानमव्ययम्। विष्णोराराधनार्थाय व्रतचर्या पितामह" इति गारुडद्वितीयाध्याये रुद्रवाक्याच्च। न च भागवतपदस्य प्रस्तुतपुराणविशेषणत्वं शङ्क्यम्, तथापदेन व्यवधानात्।

अथवाऽस्तु भागवतपदस्य प्रस्तुतपुराणविशेषणत्वम्, तथापि **"यत्राधिकृत्य"** इत्यादिलक्षणाक्रान्ततया न *श्रीमद्भागवतस्य पदवीमधिरोढुं तदर्हति, प्राचीनदानसागरस्मार्तनिबन्धकारस्तु,* तत्तत्पुराणोपपुराणसङ्ख्याबहिष्कृतनिन्दितकर्मयोगात्, पाखण्डशास्त्रानुगतं विविच्य देवीपुराणं न निबद्धमत्रेत्युक्त्वा देवीपुराणस्याप्रामाण्यमङ्गीचकार। वस्तुतस्तु तस्योपपुराणत्वं सर्वसम्मतम्। न चाष्टादशोपपुराणसङ्ख्यायां देवीपुराणं न श्रूयत इति वाच्यम्, उपपुराणानामष्टादशसंख्यातोऽप्यधिकत्वात्।

केचित्तु, "यदिदं कालिकाख्यं च मूलं भागवतं स्मृतम्" इति हेमाद्रौ पुराणदानप्रस्तावे कालिकापुराणवचनात्कालिकापुराणं भागवतमित्याहुः, तन्मूलमित्यपि पाठ इति च। तदप्यापातरमणीयम्। तत्रैव कालिकापुराणे, "शैवं यद्वायुना प्रोक्तं वैरञ्चं वैष्णवं तथा। यदिदं कालिकाख्यं च मूलं भागवतं स्मृतम्। सौरं च नारदीयं च मार्कण्डेयं च वह्निजम्। भविष्यं ब्रह्मवैवर्तं लैङ्गं चैव त्रयोदशम्। वामनं कौर्मं मात्स्यं च सप्तदशं च गारुडम्। स्कान्दमष्टादशं प्रोक्तं पुराणं च न संशयः" इति लैङ्गादीनां त्रयोदशत्वादिकथनस्य 'भागवतम्' इतिपदस्य कालिकापुराणविशेषणत्वे विरोधापत्तेः। तस्मात्कालिकापुराणतो भिन्नमेव भागवतमुपपुराणम्। एतेन यदिदं कालिकाख्यं तन्मूलं भागवतं स्मृतम्" इति पाठमङ्गीकृत्य, तन्मूलं तस्य कालिकापुराणस्य मूलं भागवतं देवीभागवतमित्यर्थो निर्बन्धकारैर्दर्शितः। यथा ह्युपपुराणान्येकै-

१ अत्र पङ्क्तिद्वयात्मको ग्रन्थः खपुस्तके नास्ति।

कस्मान्महापुराणान्निर्गतानि, तथेदं भागवतादुत्पन्नमिति यावत् । तच्च भागवतं वैष्णवं तन्मूलं भवितुं नार्हति । देव्युपपुराणस्य देवीपुराणमूलकत्व एव सामञ्जस्यात् । शैवोपपुराणानां शैवेभ्य एव, वैष्णवपुराणानां वैष्णवेभ्य एवोत्पत्तिदर्शनादिति देवीभागवतमेव तन्मूलमित्युक्तिः परास्ता । विशदतया परास्ता भविष्यति च ।

तदुपपुराणं भागवतं किमिति जिज्ञासायां यदादित्यपुराणे "ततो भागवतं प्रोक्तं भार्गद्वय-विभूषितम्" इत्युक्त्वा "ददाति सूर्यभक्ताय यस्तु भागवतं द्विजः । सर्वपापविनिर्मुक्तः सर्वदोष-विवर्जितः । जीवेद्वर्षशतं साग्रमन्ते वैवस्वतं पदम्" इति यद्दानफलमुक्तं, तदेव बोध्यम् ।

कश्चित्तु, कालिकापुराणसहचरितत्वेन देवीभागवतपरमित्याह । इतरस्तु देवीभागवतं निर्मूल-माह । अयं विचारश्च विस्तरतो निरूपणीयोऽग्रे ।

न च "शैवं यद्वायुना प्रोक्तम्" इत्यादिमहापुराणक्रमपाठात्कालिकापुराणस्य महापुराणत्व-मिति वाच्यम्, क्रमभेदात्, महापुराणगणनायां सर्वत्र कूर्मस्कान्दविष्णुमत्स्यादिक्रमदर्शनात् । कूर्मपुराणे प्रथमाध्याये चोपपुराणगणनायां द्वादशत्वेन कालिकापुराणस्य गणनात् । "आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम् । तृतीयं नारदमुपदिष्टं कुमारभाषितम् । चतुर्थं शिवधर्माख्यं साक्षान्नारदभाषितम् । दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम् । कापिलं मानवं चैव तथैवोशन-सेरितम् । ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च । माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् । पराशरोक्तमपरं मारीचं भार्गवाह्वयम्" इत्येव वाक्यात् ।

अत्र कश्चित् "पराशरोक्तमपरम्" इत्यस्याग्रे "तथा भागवताह्वयम्" इति कल्पितवान् । तदयुक्तम् । मारीचभार्गवयोरपलापापत्तेः । एकस्य भागवतस्य निवेशे एकस्य न्यूनतायां सप्त-दशत्वापत्तेः अनेकेषु पुस्तकेषु "मारीचं भार्गवाह्वयम्" इत्येव पाठात् । सूतसंहितायां "ततः कालीपुराणाख्यं वासिष्ठं मुनिपुङ्गवाः" इत्युपपुराणेष्वेव गणनात् । अतएव कालिकापुराणोक्त-गणनायां सौरनिवेशोऽपि सङ्गच्छते । अतः पुष्करपुराणशिवरहस्यविष्णुधर्मोत्तरविष्णुरहस्यदीक्षा-दीन्युपपुराणानि भिन्नान्येवेति तत्रोक्तं भागवतं भिन्नमेवेति निश्चयः । तस्मादादित्यपुराणमपि न श्रीमद्भागवतपदवीमधिरोढुमर्हति । मात्स्योक्तलक्षणानाक्रान्तत्वात् । एतेनादित्यपुराणस्य भागव-तत्वं वदन्तो निरस्ताः ।

धारणधर्मरूपलक्षणस्याभावाद् देवीभागवतादावेव एवोपलभ्यमानत्वात् । "सारस्वतस्य कल्पस्य वृत्तान्तो यत्र वर्ण्यते । गायत्रीछन्दसाऽऽरम्भस्तद्भागवतमुच्यते" इति दिनकरलिखितवचने गायत्रीछन्दस एव गायत्रीप्रारम्भकथनाद्देवीभागवतमेव, न विष्णुभागवतम् । एवञ्चैतद्वचनानुसारेण "गायत्र्या च समारम्भः", "यत्राधिकृत्य गायत्रीम्" इत्यत्रापि गायत्रीछन्दसा यत्रारम्भो गायत्रीछन्दोऽधिकृत्यारम्भो वेत्यर्थ एव ।

किञ्च, "हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्य च" देवीभागवत एव विस्तरशो निरूपणाद्विष्णुभागवते न तथा निरूपणम् । अल्पनिरूपणेऽपि सारस्वतवृत्तान्तस्य देवीभागवत एवोपलम्भादतो मात्स्यपुराणोक्तसकलभागवतलक्षणानां देवीभागवतपरत्वमेव । "प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम्" इति मात्स्यश्रीमद्भागवतवचनयोः सिंहवाहनत्वेन लिङ्गेन देवीविषयतया देवीभागवतमेव वक्ति ।

किञ्च, विष्णुभागवतं हि भारतोत्तरं दशलक्षणलक्षितं निर्मितमिति श्रूयते । मात्स्यस्कान्दयोः "अष्टादशपुराणानि कृत्वा सत्यवतीसुतः । भारताऽऽख्यानमखिलं चक्रे तदुपबृंहणम्" इति, "चक्रे भारतमाख्यानं वेदार्थैरुपबृंहितम्" इति च क्रमेण पठ्यते । तेनाष्टादशपुराणबहिर्भूतत्वे सिद्धे कथं महापुराणदानप्रकरणस्य श्लोकेषु विष्णुभागवतस्यावसर इति । "अम्बरीषशुकप्रोक्तं नित्यं भागवतं शृणु" इत्यत्र शुकाय प्रोक्तमिति विग्रहे देवीभागवतपाठमेव विधत्ते । तस्माद्देवीभागवतं महापुराणं, विष्णुभागवतमुपपुराणमित्याहुः ।

तन्न, विचारचारु; "यत्राधिकृत्य" इत्युक्त्या श्रीमद्भागवतपरतयैवास्य लक्षणस्य युक्तत्वात् । उत्तरोत्तरानुवृत्तया स्वार्थबोधकत्वरूपाधिकारलक्षणस्यार्थ एव सम्भवात् । तथा छन्दसो वक्तुमशक्यत्वात् । "अथ शब्दानुशासनम्" "अथ योगानुशासनम्" इत्यादावासमाप्तेः शब्दस्य योगस्य च विचारवत् । एवं च, "गायत्र्या च समारम्भः" इत्यत्रारम्भोऽधिकार इत्यर्थः । "अथेत्ययं शब्दोऽधिकारार्थः" इति महाभाष्ये 'अधिकारः प्रस्तावः' इति कैयटे । 'प्रारम्भः' इति विवरणकारैराम्भाधिकारयोः पर्यायत्वावबोधनात् । "सारस्वतस्य कल्पस्य वृत्तान्तो यत्र वर्ण्यते । गायत्रीछन्दसाऽऽरम्भस्तद्भागवतमुच्यते" इति दिनकरलिखितवचनस्य तु पुराणनाम्नाऽनुल्लेखादप्रसिद्धत्वाच्च निर्मूलत्वमेव भाति ।

अस्तु, समूलता वा, तथापि; गायत्रीछन्दसेत्यत्र गायत्रीमन्त्रेणेत्यर्थात्तस्यानुकूलतैव; छन्दःशब्दस्य वेदपरत्वात् । तन्त्रेष्वपि गायत्र्यः सम्भवन्ति । तद्व्यावृत्तये तदुल्लेखः । यद्याग्रहेण छन्दःपरत्वमुच्यते, तर्हि; "अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः । गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः । पुराणानां साररूपः साक्षाद्भागवतोदितः । द्वादशस्कन्धसंयुक्तः शतविच्छेदसंयुतः । ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः" इति गरुडपुराणवचनस्य विरोधो दुर्वारः । पाद्मे श्रीमद्भागवतमाहात्म्य एकोनविंशाध्याये "अर्थो यो ब्रह्मसूत्राणाम्" इत्यारभ्य "श्रीमद्भागवताभिधः" इत्यन्तं गारुडसमं पठित्वा "हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा । गायत्र्या च समा-

[1] विष्णुभागवतं हि भारतोत्तरं दशलक्षणलक्षितस्य भागवतस्य निर्माणं श्रूयत इति भ्रान्तः पाठ इति मे प्रतिभाति ।

रम्भस्तद्वै भागवतं विदुः" इत्युक्तम् । अत्र "गायत्रीभाष्यरूपोऽसौ" "गायत्र्या च समारम्भः" इत्युक्तेश्च विरोधो दुष्परिहरः । "गायत्रीभाष्यरूपोऽयं द्वादशस्कन्धसंयुक्तः । ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः" इतिहरगौरीतन्त्रस्य विरोधश्च दुष्परिहरः । अत एव "ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंयुतः । परीक्षिच्छुकसम्वादः श्रीमद्भागवताभिधः । पुराणेषु च सर्वेषु श्रीमद्भागवतं परम् । यत्र प्रतिपदं विष्णुर्गीयते बहुधर्षिभिः । इति सङ्कल्प्य मनसा श्रीमद्भागवताभिधम् । जन्माद्यस्य यतश्चेति धीमहीत्यन्तमुपावदत्" इति पाद्मोक्तं देवीभागवते कथमप्यसम्बद्धमेवैव सङ्गच्छते । "श्रीमद्भागवतं नाम पुराणं वेदसम्मितम्" इति नारदीयवचने वेदसम्मितत्वकथनेन वेदमूलगायत्र्याः समारम्भस्यैव युक्तत्वात् । "अथवा हवनं कुर्याद्गायत्र्या सुसमाहितः । तन्मयत्वात्पुराणस्य परमस्यास्य तत्त्वतः" इति पाद्मे षडध्यायश्रीभागवतमाहात्म्ये सप्ताहश्रवणविधिप्रसङ्गे गायत्रीमयत्वेन प्रतिपादनात् ।

किञ्च, दिनकरवचने गायत्र्यारम्भसमभिव्याहृतसारस्वतकल्पवृत्तान्तवर्णनरूपलक्षणकथनाच्छ्रीमद्भागवत एव तदुपलम्भः । "ब्रह्मानन्दमयो लोके व्यापिवैकुण्ठसञ्ज्ञितः । तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः" इत्यादिवेदस्तुत्यनन्तरं प्रसन्नेन भगवता स्वलोकादिप्रदर्शनोत्तरं "आगामिनि विरञ्चौ तु जाते सृष्ट्यर्थमुद्यते । कल्पे सारस्वते प्राप्ते व्रजे गोप्यो भविष्यथ" इति बृहद्वामनपुराणस्थवेदाकाङ्क्षितवरदानवाक्येन सारस्वतकल्पीयदशमचरित्रस्य स्पष्टं प्रतीयमानतया श्रीमद्भागवत एव सम्भवेन तदारम्भे गायत्र्यर्थस्यैवोपलभ्यमानत्वात् । एतेन सारस्वतकल्पीयकथा श्रीमद्भागवते नास्तीति परास्तम् । अयं विचारस्तु निपुणतयाऽग्रे स्फुटीभविष्यति ।

किञ्च, श्रीमद्भागवते प्रथमे "सूत जानासि भद्रं ते भगवान् सात्वतां पतिः । देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया" इत्यादिना श्रीकृष्णचरितस्यैव मुख्यतया पृष्टत्वात्तस्यैव दशमे स्फुटतरनिरूपणेन सूतेनोत्तरदानाद्दशमे चरितस्य सारस्वतकल्पीयत्वात् । तत्र गोपीनां श्रुतिरूपत्वस्य बृहद्वामने निरूपणात् । गायत्र्याश्च वेदमूलतया वेदसारस्य श्रीमद्भागवतस्यारम्भेऽवश्यमपेक्षणीयत्वात् ।

प्रलयौ बोध्यौ । तौ वरेण्यभर्गःशब्दाभ्यां सूचितौ । 'वरेण्यम्'इत्यस्यार्थमाह–"तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा" इति । ध्यानविषये भगवति जडजीवधर्माणां मायिकत्वात्तन्निराकरणेन, माया, तत्कार्यसम्बन्धलेशाभावाद्वरणीयं सुन्दरमिति । यश्च निर्दोषः स एव वरणयोग्यः। 'भर्ग'शब्दं व्याचष्टे–"धाम्ना स्वेन सदा निरस्तकुहकम्" इति । एतेन भर्जयत्यखिलामविद्यामिति भर्गःशब्दः सान्तो व्याख्यातः । 'देव'पदव्याख्यानमाह–"स्वराड्" इति । स्वरूपानन्द एव रमत इति । 'धियो यो नः प्रचोदयात्' इति व्याचष्टे–"तेने ब्रह्म हृदा य आदिकवये" इति । 'यः' इति गायत्र्यन्तर्गतस्य ग्रहणमिति श्रीमदाचार्यचरणोक्तानुसारेणोक्तं इति ।

केचित्तु, तत्सवितुर्देवस्येत्यस्यार्थो 'जन्माद्यस्य' इति । 'वामं वरेण्यं परम्' इत्यभिधानात् 'वरेण्यम्' इत्यस्य व्याख्यानं 'परम्' इति । 'भर्गः' इत्यस्य व्याख्यानं 'धाम्ना स्वेन सदा निरस्तकुहकम्' इति । भर्गः सकलदुरितभञ्जनज्योतीरूपम् । 'तत्' पदार्थव्याख्यानं 'स्वराट्' इति । 'धियो यो नः प्रचोदयात्' इत्यस्य व्याख्यानं 'तेने ब्रह्म हृदा य आदिकवये' इति प्रोचुः ।

अन्ये तु, 'तत्' पदस्य प्रतिपदं 'यः' इति, 'वरेण्य' पदस्य प्रतिपदं 'अभिज्ञः' इति, 'भर्ग' इति पदस्य प्रतिपदस्वरूपं 'तेजः' इत्यर्थः, देवपदस्य प्रतिपदं 'अस्य' इति, 'धीमहि' इत्येव, 'धिय' इति पदस्य प्रतिपदं 'कवयः' इति, 'प्रचोदयात्' इत्यस्य प्रतिपदं "आदिकवयः' इति, 'प्रचोदयात्' इत्यस्य प्रतिपदं 'तेने' इत्याहुः ।

वीरराघवाचार्यास्तु 'जन्माद्यस्य यतः' इति सवितृपदार्थ उक्त इति, 'यः' इति पदेन 'तत्' शब्दार्थश्च सूचितः' 'सूरयः' इत्येनेन वरेण्यशब्दार्थ उक्तः; उक्तं हि सावित्रीविवरणे "वरेण्यं वरेण्यं न तु वरा ध्यातार ईरिताः', 'तेने' इत्यादिना देवशब्दार्थ उक्तः, 'द्योतनः सर्वभावानां द्योतमानः स्वयं सदा' 'अज्ञानमखिलं तुदन्' इति, तत्रोक्तं द्यन् खण्डयन्, दोवखण्डने, द्योतकः प्रकाशकः 'जन्मादि' इत्यनेन देवशब्दार्थ उक्तः, जगद्व्यापारो हि तल्लीला; 'धाम्ना' इत्यादिना भर्गःशब्दार्थ उक्तः, 'भर्गस्तेजः समाख्यातम्', 'भर्जयत्यखिलं कष्टम्' इति च तत्रोक्तम्; 'स्वराट्' स्वतन्त्रः, प्रेरकत्वेन धीप्रचोदनम्; "धियो धीपूर्विकाश्चेष्टा प्रेरणं तु प्रचोदनम्' इति हि तत्रोक्तम्; एवं प्रदर्शितया रीत्या गायत्र्युपक्रमत्वसिद्धिरित्याहुः ।

सर्वेष्वेतेषु पक्षेषु श्रीमदाचार्यचरणोक्त एव सम्यक् । एवं च गायत्र्यधिकारस्यैवात्र सुलभतया 'जन्माद्यस्य यतश्चेति धीमही धान्तमुपावदत्' इति पूर्वोदाहृतपाद्मवचनस्य प्रतिपदोक्तत्वेन जागरूकतया 'गायत्रीभाष्यरूपोऽसौ' इत्याद्यन्येषामपि वचनानामानुगुण्येन च 'यत्राधिकृत्य गायत्रीं' 'गायत्र्या च समारम्भः' इति वचनयोः समावेशः श्रीमद्भागवत एव न देवीपुराण इति प्रमाणानुसारिणो विभावयन्तु ।

एतेनारम्भश्लोके शार्दूलविक्रीडिते गायत्र्यारम्भस्यान्वयाद्विष्णुभागवतपरमिदं लक्षणं न सम्भवतीति निरस्तम् । अत एव "गायत्रीभाष्यरूपोऽयम्" इति हरगौरीतन्त्रवचनसमानार्थत्वाय गायत्र्यर्थ एव गायत्रीपदलक्ष्यत्वमर्हति ।

गायत्र्यर्थश्च विष्णुध्यानं, न तु शिवशक्तिसूर्यादिध्यानमित्याग्नेये गायत्र्यर्थनिरूपणाध्याये

निर्णीतम्। विष्णुध्यानं तु श्रीमद्भागवतप्रथमश्लोक एव वर्ण्यते, न तु देवीभागवतप्रथमश्लोके। शक्तिध्यानस्यैव तत्र वर्णनादिति दामोदरशास्त्रिण आहुः।

"ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति भगवदुक्त्या, "परं ब्रह्म परं धाम" इति कृष्णसखवाक्ये परब्रह्मत्वेन बोधितस्य श्रीकृष्णस्य गायत्र्यां 'तत्' पदेन बोधित्वात्। तच्छ-ब्दस्य प्रसिद्धार्थकत्वेऽपि "अतोऽस्मि लोके वेदे च प्रथितः (प्रसिद्धः) पुरुषोत्तमः" इति भगवद्वाक्याच्च तथा। तत्पदप्रतिनिधीभूतसत्यपदेन "सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठि-तम्। सत्यासत्यौ हि नामतः" इति भारतोद्योगपर्वण्युक्तत्वाच्च, भागवत एवाभिधानात्तस्यैव श्रीमद्भागवताद्यपद्ये ध्यानमिति वा बोध्यम्।

यत्तु कथितं, गायत्र्यर्थश्च विष्णुध्यानं न तु शिवशक्तिसूर्यादिध्यानमित्युक्तिस्तु नास्ति-कत्वमूलिकैवेति। मैत्रायणीयानां 'भर्गो रुद्रः' इति श्रुतेः। प्रपञ्चसारादिसर्वतन्त्रपुराणादिषु शिव-शक्तिसूर्यादिरूपार्थस्योक्तत्वाच्च। त्वदुदाहृताग्नेयवाक्यं तु "विरोधे त्वनपेक्ष्यं स्यादसति ह्यनु-मानम्" इति न्यायात्त्तावकत्वमेवेत्याह।

तदतितुच्छम्, अप्पय्यदीक्षितग्रन्थे शिवतत्त्वविवेके "विष्णुसंज्ञम्" इति श्रुतिः, "क्वचि-द्वरेण्यं सवितुर्भर्गं विष्ण्वाभिधं जगौ। ततश्च विष्णोरेवार्थो गायत्र्याः..." इति कारिकायां 'विष्णुसंज्ञम्' इति श्रुतेः। बृहद्योगियाज्ञवल्क्येनापि "हिरण्यगर्भं पुरुषं व्योम्नि तद्विष्णुसंज्ञितम्। 'भ' इति भासयति लोकान् 'र' इति रञ्जयते प्रजाः। 'ग' इत्यागच्छतेऽजस्रं भरणाद् 'भर्ग' उच्यते" इति कथनाच्च भर्गाख्यो विष्णुरेव।

किञ्च, एतच्छ्रुतिस्मृत्येकवाक्यतया "अथ भर्गो देवस्य धीमहीति सविता वै देवस्ततो योऽस्य भर्गस्तं चिन्तयामि। अथ भर्ग इति यो ह वा अमुष्मिन्नादित्ये निहितस्तार-कोऽक्षिणि रहस्यगिति भर्गो भर्जयति चैष भर्गाख्यो भाभिर्गतिर्वैष भर्ग इति रुद्रो ब्रह्मवादिनोऽथ 'भ' इति भासयतीमाँल्लोकान् 'र' इति रञ्जयतीमानि भूतानि 'ग' इति गच्छन्त्यस्मिन्नागच्छन्त्यस्मादिमाः प्रजास्तस्माद्भर्गः। भूयमानात्सूर्यः। सवनात्स-विता।" इति मैत्रायणीयश्रुतावपि विष्णोरेव ग्रहणात्। आदित्ये वर्तमानस्य भर्गरूपस्याऽक्षि-स्थलिङ्गेन च हरेरेव निश्चयात्।

इत्यादिनाऽऽदित्यस्य विभूतित्वमभिधाय, "य एष पुरुषः एष भूतानामधिपतिः" इति भूतपतित्वेन तं निर्दिश्य तदग्रिमानुवाकेषु "सर्वो वै रुद्रः इत्यादिषु, "हिरण्यबाहव अम्बिकापतय उमापतये" इत्युपसंहारेण तत्र शिवाकारतानिर्णयसाधकमिति चेत्, न; "क्षरः सर्वाणि भूतानि" "पादोऽस्य विश्वा भूतानि" "भूतग्रामः स एवायम्" "भूतानां योऽव्ययः पिता" इत्यादिवत् प्राणिमात्र-याचकत्वाभावान्न नीलकण्ठादिरूपं लिङ्गम्। आग्रहेण प्रेतमात्रवाचकत्वपरिच्छिन्नैश्वर्यबोधकत्वेन परमैश्वर्यविघटकत्वेनालिङ्गत्वमेवेत्युभययापि तदगमकत्वात्। "सर्वो वै रुद्रः" इत्यादिनां तु न वाक्यशेषत्वम्। "आदित्यो वै तेजः इत्यनुवाकान्तः" इत्युपनिषदि समाप्तिबोधनात्।

यत्तु, अन्तर्यामिब्राह्मणे "एष आत्मान्तर्याम्यमृतः" इति कथनाज्जाबालोपनिषदि "एतानि ह वाऽमृतस्य नामधेयानि" इति शतरुद्रीयप्रशंसावाक्येनाऽमृतपदस्य शिवपरतानिर्णायकत्वमिति, तन्न; शतरुद्रीयस्यामृतनामत्वेऽपि अमृतपदस्य शिवनामत्वाभावात्। अतस्त्रिलोचनादिसाधकस्य पदस्याभावादक्षिद्वयविशिष्टो विष्णुरेव। अत एव मैत्रायणीयश्रुतौ "अक्षिणी" इति निरुपमस्य द्वित्वविशिष्टस्य बोधनाद्विष्णुरेवाऽक्ष्यन्तर्वर्ती। "ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः। केयूरवान्मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः" इति वाक्यात्। तथा च भारतेऽश्वमेधपर्वणि पार्थं प्रति भगवद्वाक्यम्, "तन्मण्डलस्थं मां ध्यायेत्तेजोमूर्तिं चतुर्भुजम्। उद्धुत्यं च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि। गायत्रीं च यथाशक्ति जप्त्वा सूक्ष्मं (क्ष्मं) च मामकम्" इति। एवं च "आदित्यान्तर्गतं मण्डलासीनं रुक्माभं पुरुषं परम्। ध्यायेज्जपेत्तदित्येतन्निष्कामो मुच्यते द्विजः" इति। तथा "आदित्यमण्डलान्तस्थं परं ब्रह्माधिदैवतम्। छन्दो निवृ(चृ)त्स्याद् गायत्री मया दृष्टा सनातनी।" इत्यादिषु भगवानेव। एतेन भगवानेव न शिवशक्तिसूर्यादयो गायत्रीरूपा इति बोध्यम्। तस्मादादित्ये वर्तमानं भर्गाख्यं भगवत एव रूपम्। किञ्च, आपाततः शिवप्रतीतावपि "रविमध्ये स्थितः सोमः सोममध्ये हुताशनः। वह्निमध्ये स्थितं सत्वं सत्वस्यान्तःस्थितोऽच्युतः" इति मैत्रायणीयोपनिषदि। योगियाज्ञवल्क्योऽपि सूर्यान्तःसोममुमासहितमुक्त्वा सर्वान्तरच्युतो भगवानेवोक्तो ध्येयत्वेन भगवानेवाद्दत इति निराबाधः पन्था इत्युवाच। ततश्च भर्गाख्ये विष्णुरेवेति स्थिते मैत्रायणीयश्रुतौ भर्ग इति रुद्र उक्तस्तस्यायमभिप्रायः—भाभिर्गतिर्यस्य हीती भर्गो भर्जयतीति वैष भर्ग इति भर्गशब्दव्युत्पत्तिदर्शनेन भर्जयति भासयति संहरतीति व्युत्पत्त्या भगवति संहारकर्तृत्वबोधाय रुद्रपदापादानम्।

यद्वा, "अप भ इति भासयतीमाँल्लोकान् र इति रञ्जयतीमानि भूतानि, ग इति आगच्छेदजस्रम्, भरणाद्भर्ग उच्यते" इत्युक्तम्। तस्माच्छिवपरत्वेन गायत्रीव्याख्यानमसङ्गतमेव।

यत्तु, "विष्णुसंज्ञितम्" इति श्रुतेः शिवपरत्वायाप्पयदीक्षितैः "सर्वे देवाः प्रवदन्ति" इत्यथर्वशिखावचनात् "शिवपरत्वादि भूम्यन्तःशरीरादि घटादि च "अधितिष्ठति शिवस्तस्माद्विष्णू रुद्र उदाहृतः" इति वायुसंहितावचनात् "भगवान्भगसद्भावान्निर्मूलत्वाच्छिवः स्मृतः। स्वामी स्वमस्य यत्सर्वं विष्णुः सर्वप्रवेशनात्" इति लैङ्गनिरुक्तिबोधकवाक्याद्विष्णुपदस्य शिववाचकत्वे सिद्धे विष्णुसंज्ञमितिश्रुतेः शिवपरत्वम्। आदित्यान्तर्गतस्य च विष्णुत्वं शिवपरमेवेत्युक्तम्।

तन्न, "विष्णुसञ्ज्ञम्" इतिश्रुतौ "व्योम्नि तद्विष्णुसञ्ज्ञितम्" इति स्मृतौ च सञ्ज्ञाबोधनादत्र विष्णुशब्दस्य यौगिकत्वस्य वक्तुमशक्यत्वात् । योगरूढशब्दानां भगवदेकतानत्वात् । मैत्रायणीयरुद्रशब्दस्य रूढत्वस्य गमकत्वाभावात् । "ध्येयः सदा" इति, "तन्मण्डलस्थं मां ध्यायेत्" इति, "रविमण्डले स्थितः सोमः सोममध्ये हुताशनः । वह्निमध्ये स्थितं सत्त्वं सत्त्वस्यान्तःस्थितोऽच्युतः" इत्याद्यनेकवचनैरक्षिणी इति द्विवचनेन चादित्यान्तर्वर्ती नारायण एव । "ध्येयः सदा" इति वाक्ये नारायणपदात्तस्य रूढत्वम् । णत्वात्तस्य यौगिकत्वकल्पने "पूर्वपदात्सञ्ज्ञायाम्" इति णत्वानापत्तिः । सोमपदस्योमासहितस्य शिवस्य ग्रहणे तदन्तर्वर्तिभगवत एव निश्चयात् । न चादित्ये शिवस्य केवलस्यैव स्थितिर्वक्तव्येति वाच्यम् । "जगत्कारणतापन्नः शिवया मुनिपुङ्गवाः । सा तस्यापि भवेच्छक्तिस्तया हीनो निरर्थकः । न शिवेन विना शक्तिर्न शक्तिरहितः शिवः । उमाशङ्करयोरैक्यं यः पश्यति स पश्यति । उमार्धविग्रहः" इत्यादिसूतसंहितावचनैः केवलस्याभावादुमासहितस्य सर्वत्र स्थितेर्वक्तव्यत्वात् । तथाच सोमान्तर्वर्तिनारायणस्य सूर्ये वर्तमानत्वात्स एव ।

यत्तु, भारताश्वमेधे "भगवन् वैष्णवा धर्माः किं फलाः किं परायणाः । कथं त्वमर्चनीयो हि मर्त्यैः काश्च तेऽनघ । कथं वैखानसा ब्रूयुः कथं वा पाञ्चरात्रिकाः । एवमेव पुरावृत्तं वैष्णवं धर्मशासनम् । श्रुता मे मानवा धर्मा इति तेभ्यो विविच्य सः । युष्मदीयान्परान्धर्मान्पुण्यान्कथय मेऽच्युत" इति वैखानसपाञ्चरात्रिकाणां धर्मस्य पृष्टत्वेन वैदिकेतरविषयत्वम् । "यन्मनुरवदत्तद्भेषजम्" इति श्रुतेर्याज्ञवल्क्यस्मृत्यपेक्षया मनुस्मृतेः प्रबलत्वं चेत्याह ।

तत्तुच्छम्, "पुराणे धर्मशास्त्रे च योंऽशः श्रुत्या विरुद्ध्यते । स तत्रार्थस्तु विज्ञेयः" इति पराशरपुराणवचनेन वेदविरुद्धे तन्त्रव्यवहारात् "विष्णुसञ्ज्ञम्" इति, "रविमध्ये स्थितः सोमः" इति श्रुतिविरुद्धपुराणत्वेन शिवस्य गायत्र्यर्थकल्पनायास्तान्त्रिकत्वेन वैदिकैरनादरणीयत्वात् । यस्मिन्नंशे तन्त्रस्य वेदानुकूलत्वं तत्र तन्त्रस्यापि प्रामाण्यमिति निश्चयः । एकं साङ्ख्यं च योगं च वेदारण्यकमेव च । परस्पराङ्गान्येतानि पञ्चरात्रं च कथ्यते । एवमेकान्तिनां धर्मो नारायणपरात्मकः" इति मोक्षधर्मोक्तेः । पञ्चरात्रस्य प्रामाणिकत्वे योंऽशः श्रुत्या विरुध्यते स त्याज्यः । तद्विशेषास्तु शुद्धाद्वैतमार्तण्डप्रकाशे निरूपिताः ।

एवं सति "वेदैश्च सर्वैरहमेव वेद्यः" इति गीतावाक्येन "सर्वे वेदा यत्पदमामनन्ति" इति वेदार्थस्य भगवतो ध्यानस्य वैदिकत्वस्यासन्दिग्धत्वात् ।

किञ्च, "श्रुता मे मानवा धर्मा" इत्युपसंहारवचनात्पूर्वं यदि गायत्र्यर्थ उक्तः स्यात्, तदा, याज्ञवल्क्यसमकक्षाणां "तन्मण्डलस्थं मां ध्यायेत्" इति वचनानां "तन्मण्डलगं ध्यायेत्" इत्याद्युत्तरवाक्यानां नैर्बल्यं सम्भाव्येत, तदुपसंहारवचनात्पूर्वं, मनुस्मृतौ च शिवत्वेनार्थः क्वापि नोक्त इति कथं साक्षाद्गायत्र्यर्थप्रतिपादकानां "विष्णुसञ्ज्ञम्" "रविमध्ये स्थितः सोमः" इत्यादिपूर्वोदितश्रुतिस्मृत्यनुकूलानां याज्ञवल्क्यस्य भारतस्य च वाक्यानां नैर्बल्यं स्यादित्यासदादिभिर्विवादेनालम् ।

किञ्च, "इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः" इति बह्वृचसंहिताश्रुतेः, "तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः । तदेव शुक्रममृतं तद् ब्रह्म तदापः स प्रजापतिः । स ब्रह्मा स शिवः स हरिः सोऽक्षरः परमः स्वराट् । अथ नित्यो देव एको नारायणः । ब्रह्मा च नारायणः शिवश्च नारायणः । शक्रश्च नारायणो द्वादशादित्याश्च नारायणो वसवोऽश्विनौ च नारायणः । सर्वे ऋषयश्च नारायणः कालश्च नारायणो दिशश्च" इति तैत्तिरीयनारायणोपनिषदि श्रूयमाणत्वात् । "त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणा" इत्यादिश्रीमद्भागवतदशमवचनेन सर्वरूपत्वनिश्चयाद् ब्रह्मैव भगवान् प्रतिपाद्यते । अत एव "पुराणेषु च सर्वेषु तत्तद्रूपो हरिस्तथा" इति श्रीमदाचार्यचरणैरुक्तम् । एतेन निर्णयेन कौमार्यादिषु "तदेकाक्षरमव्यक्तं तदादित्यगतं परम्" इत्यादिवाक्यं शिवं प्रकम्य पठितम् । तथा राजवंशानुकीर्तने गायत्र्या हिरण्मयं पुरुषमुपासमानस्य वसुमनसो राज्ञः शिवो रविमण्डलादाविर्भूय "साम्बं रूपमदर्शयत्" इत्युक्तम् । आदित्यपुराणे च गायत्र्याः परमं तत्त्वं शिवः" इत्युक्तम् । सुन्दरीतापिन्यां प्रथमे "शैवेयं भगवती त्रिपुरा" इति प्रक्रम्य तदधिष्ठातृत्वेन शिवं च प्रकृत्य द्वितीयादिखण्डेषु गायत्रीविवरणे पञ्चमखण्डे उक्तम् । "तस्मात्तदुच्यते कामः कामं कामी शिवो मतः । कृष्णोऽयं कामदवोऽयं वरेण्यं भर्ग उच्यते" इत्यादि च व्याख्यातम् । तादृशाधिकारिणस्तस्य सार्थक्यादिति दिक् ।

भर्गःशब्दस्तु सान्त एवेति । तस्य सिद्धिस्तु 'भ्रजी भर्जने' इत्यस्माद् "युजिभृजिभ्यः कुश्च" इत्युणादिसूत्रेणासुन्प्रत्यये कवर्गान्तादेशे बोध्या । न च "भ्रस्जपाके भवेद्धातुः" इति योगियाज्ञवल्क्यस्मृतिविरोध इति वाच्यम् । आर्थिकार्थमादाय तदुक्तेः । यद्वा भ्रस्जेस्तस्यैवात्र रूपम् । असुन्प्रत्ययस्तु "सार्वधातुभ्योऽसुन्" इत्यनेनैव सिद्धः । कुत्वं छान्दसत्वादिति विद्यारण्यप्रभृतयः सान्तमेवाङ्गीचक्रुः ।

यत्तु केचिच्छैवाः, भ्रस्जपाके इतिधातोर्णिचि "भ्रस्जोरोपधयोः इति रमागमे स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तौ भर्जेरित्यस्मात् "अकर्तरि च कारके सञ्ज्ञायाम्" इति बाहुलकात्कर्तर्यपि घञ् 'नेत्यादिर्नित्यम्' इत्याद्युदात्तस्वरे 'भर्ग'इत्यदन्तप्रयोगसिद्धिः । अत एव 'भर्गाख्यं तं चिन्तयामि' इति श्रुतिप्रयोगः । "तद्भर्गाख्यं किमपि परम्" इति साम्बस्तुतेरपि । तथा, यो भर्गो नः प्रचोदयात् । तत्पदं च लुप्तषष्ठीकमङ्गीकृत्य तस्य सवितुर्देवस्य वरेण्यं धीमहीत्यन्वयं वदन्तः शिवपरत्वम्, शिवस्य च परमपुरुषत्वम्; अन्यथा सवितृपदस्य ब्रह्मवाचकत्वे य इति पुंलिङ्गपदेन निर्दिष्टस्य कर्तुरनन्वयापत्तेरित्याहुः ।

तन्न, सान्तपक्षे भर्गाख्यप्रयोगस्य शकन्ध्वादित्वात्पररूपेण सिद्धेः । "कः सविता का सावित्री" इत्युपक्रम्य "द्वितीयपादो भर्गमयः" इति तलवकारब्राह्मणप्रयोगस्तु पृषोदरादित्वात्सिद्धः । तस्मादेकान्ततो नादन्तत्वसिद्धिः । अस्तु वाऽदन्तत्वे "तत्सवितुर्वरेण्यमित्यसावादित्यः सविता स वा एव प्रवरणीय आत्मकामेनेत्याहुर्ब्रह्मवादिनोऽथ भर्गो देवस्य धीमहीति सविता वै देवस्ततो वाऽस्य भर्गाख्यस्तं चिन्तयामीत्याहुर्ब्रह्मवादिनोऽथ धियो नः प्रचोदयादित्याहुः" इति

मैत्रामणीयश्रुतिविवरणवाक्येन तमिति द्वितीयान्तं भर्गाख्यं चिन्तयामीत्यन्वयबोधेन भर्गशब्दस्य प्रथमान्तकल्पनाया भर्गपदस्य तृतीयपादान्वयकल्पनायाश्चासङ्गतत्वबोधनात् । भर्ग इत्यत्र द्वितीयायाः "सुपां सुलुक्" इति स्वादेशसिद्धेः । तदित्यत्र अमो लुक् । सान्तपक्षेऽप्युभयत्र लुक् ।

वस्तुतस्तु "एवं प्रवरणीयः" इत्यनेन प्रवरणीयत्वकथनेन "सवितुर्देवस्य वरेण्यं तद्भर्गो धीमहीति यः सविताः नः धियः प्रचोदयात्" "योऽस्य भर्गाख्यः" इत्युक्त्वा तस्य सवितुर्देवस्य वरेण्यं भर्गो धीमहि" इति च श्रुतिसिद्धान्वयः ।

ननु "तदक्षरं तत्सवितुर्वरेण्यम्" इतिश्वेताश्वतरे, याजुषब्राह्मणे प्रथमाष्टकेऽपि "तत्सवितुर्वरेण्यम्" इत्याह, प्रसूत्या इतिनिरूपणात्सवितुर्वरेण्यमित्येवान्वयो न भर्गशब्दोऽप्युच्युत इति चेत्, न; वरेण्यत्वाय तथोक्तं द्वितीये फलार्थं तदिति प्रसूत्या इत्युक्तत्वात्; तस्मान्मैत्रायणीयश्रुत्यनुरोधादन्वयो निराबाध इति दिक् ।

यच्च, सवितृपदस्य ब्रह्मवाचकत्वे 'यः' इति पुंलिङ्गनिर्देशानुपपत्त्या परमपुरुषः शिवो ग्राह्य इति । तदप्याग्रहादेव शोभते, न तु विचारेण । "एक एव नारायण आसीन्न ब्रह्मा नेशानः" इति । "पुरुषो वै नारायणोऽकामयत" इति । "तत्सवितुर्वरेण्यमित्यसौ वा आदित्यः सविता" इत्यादिश्रुतिषु "परं ब्रह्म परं धाम पवित्रं परमं भवान्" "मत्तः परतरं नान्यत्" "पुरुषः स परः पार्थ" "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इत्यादिस्मृतिषु पुंलिङ्गपददर्शनात् । "सवनात्सविता" इति मैत्रायणीयश्रुतेः । "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" इति गीतावाक्यादिसिद्धजगत्कर्तृत्वबोधकसवितृपदेन पुरुषोत्तम एव । याज्ञवल्क्येनाऽपि तथा विवृतत्वात् । तस्मादत्र सवितृशब्दो यौगिकः । "आदित्यमण्डलान्तस्थम्" इत्यादिवचनानां तु तत्र ध्येयभगवत एव सवितृपदेन बोधनात् । अत एव "सविता देवता" इति श्रुतिः । "विश्वामित्र ऋषिः छन्दो गायत्री देवता रविः" इति भरद्वाजस्मृतिरपि व्याख्याता । किञ्च, सर्वात्मकत्वाद्भगवतः सूर्यादिरूपेण निरूपणम् ।

यद्वा, "पुरः स्फूर्तिकमादाय रविरेतस्य देवता, तदन्तर्विधिमादाय शिवः सोमोऽस्य देवता सर्वान्तरविचारे तु भगवानेव देवता" इति श्रीमत्पुरुषोत्तमचरणोक्तेः सर्वसद्भावो बोध्यः । इदं च "रविमध्ये" इति स्मृतिवचनान्न कापि शङ्कावकाश इति दिक् ।

गायत्र्याः शक्त्यादिरूपकल्पनापि तद्वानुरोधिनीति तदनुसारिपुराणवचनान्यपि तथा ।

यत्त्वाग्नेयवाक्यं, तत्तु "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इति न्यायात्त्याज्यमेवेत्याद, "तदसङ्गतं विरोधे तु" इति सूत्रे "औदुम्बरीं वेष्टयेत्" इति ज्योतिष्टोमे सदो मण्डपस्य मध्ये काचिदौदुम्बरी शाखा निखन्यते । तत्र "औदुम्बरी सर्वा वेष्टयितव्या" इति वाससा वेष्टनं स्मर्यते । "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रुतम् । तत्र किं कार्यमित्यपेक्षायां पूर्वाधिकरणेऽष्टकादिस्मृतेः प्रामाण्यस्य साधितत्वादस्या अपि प्रामाण्यात्सर्ववेष्टनं कार्यमिति प्राप्ते प्रत्यक्षश्रुतिविरुद्धा स्मृतिर्नादरणीया । श्रुतिप्रामाण्यस्य श्रुत्यनुमानसापेक्षत्वात् । प्रत्यक्षश्रुतिमनादृत्य तस्या आदरे हेत्वभावादिति स्मृतिपादे सिद्धान्तितम् । तथा च पूर्वोक्तश्रुतिसिद्धस्य पुरुषोत्तमप्रतिपादनस्य

जाकरूकत्वेन द्वितीयपादमर्गपदान्वयस्य सिद्धत्वेन तद्विहाय शिवसूर्यादीनां गायत्र्यर्थप्रतिपादनं पुराणतन्त्रवचनानामनादरणीयत्वात्तदनुसारितृतीयपदान्वयस्याप्यनादरणीयत्वात् । आग्नेयवाक्यं तु प्रत्यक्षश्रुतिमूलकत्वात्स्वार्थप्रमाणमेवेति तस्य स्वापकत्वकथनं प्रत्यक्षश्रुत्यनालोचनादिति दिक् ।

तस्मात्पुरुषोत्तमो भगवानेव गायत्र्यर्थः । ततश्च "सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् । परिहाप्यापि वेदांस्त्रीन् - कर्माणि विहितानि च । गायत्रीमात्रमाश्रित्य द्विजो भवति निर्भयः । गायत्रीहीनवेदास्तु साङ्गा अपि च निष्फलाः" इत्यादिस्मृतयो गायत्र्युत्कर्षबोधनेन तदर्थभगवदुत्कर्षबोधिकाः । तथा च ज्ञात्वा ज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति । विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषः क्वचित्" इति गीतोक्तेरिदं निरूपितमित्यलम् ।

यत्तु, हयग्रीवब्रह्मविद्या देवीभागवत एव न विष्णुभागवते । हयग्रीवनामासुरो देवी भागवतप्रथमस्कन्धे प्रसिद्धस्तेनोपासिता ब्रह्मप्रतिपादिका विद्या स्त्रीदैवत्यो मन्त्रः, सा विद्या यत्र वर्तते तद्भागवतमित्यर्थः । स दैत्यस्तदुपासिता विद्या चेत्युभयमपि तत्रैव प्रथमस्कन्धे दर्शितम् । "जपन्नेकाक्षरं मन्त्रं मायाबीजात्मकं मम" इत्यादिनेत्याह, तन्न, वेदैकसमाधिगम्यस्य ब्रह्मणः प्रतिपादकत्वं मायाबीजस्य न सम्भवति । यतो मायाबीजप्रतिपाद्यं ब्रह्मेति क्वापि वेदे न श्रूयते । न च "पञ्चप्रेतासनारूढां परब्रह्मस्वरूपिणीम्" इति तन्त्र उक्तत्वात्तत्प्रतिपादकबीजस्य ब्रह्मप्रतिपादकत्वमिति वाच्यम् । वेदैकशरणानां वेदविरुद्धतन्त्राणामप्रामाण्यात् । अस्तु प्रामाण्यम्, परन्तु प्रत्यक्षश्रुत्यपेक्षया तस्यौदुम्बरीवेष्टनन्यायेन न्यायवदनादरणीयत्वात् । हयग्रीवब्रह्मविद्येत्यत्र श्रीमद्भागवते पञ्चमस्कन्धे "भद्राश्ववर्षे साक्षाद्भगवतो वासुदेवस्य प्रियां तनुं धर्ममयीं हयशीर्षाभिधानां परमेण समाधिना सन्निधाप्येदमभिगृणन्त उपधावन्ति ॐ नमो भगवते धर्मायात्मविशोधाय नमः" इत्यादिगद्येन हयग्रीवब्रह्मणो मन्त्ररूपा विद्या दर्शिता । देवीभागवतेऽप्यष्टमस्कन्धे दर्शितेति दामोदरशास्त्रिणो व्याचख्युः ।

तत्र कश्चित्, शारदातिलकादिषु "मन्त्राः पुंदेवताः प्रोक्ता विद्याः स्त्रीदेवताः पुनः" इत्यादिवचनैः स्त्रीदैवत्यमन्त्रेष्वेव विद्यापदप्रयोगो न पुंदैवेष्विति प्रतिपादनात्, क्वचित्पुंदैवत्यमन्त्रे तथा प्रयोगस्तु गौणः, नच गौणार्थमादाय तद्वचनस्य विष्णुभागवतपरत्वं कल्पयितुमुचितम्, लक्षणारूपदोषापत्तेरित्याह, तन्न; शारदातिलके "मन्त्रविद्याविभागेन द्विविधा मन्त्रजातयः" इति पूर्वार्धनिरूपणात् स्त्रीदैवतयोर्मन्त्रविद्ययोर्जातिशब्दत्वेन व्यवहारो बोधितः । एवं च "द्वादशाक्षरविद्या" इत्यादौ पुंदैवत्येषु विद्याप्रयोगः सञ्ज्ञाशब्दत्वेन बोध्यः । तथा च श्रीमद्भागवतद्वितीयस्कन्धे "सत्रे ममास भगवान् हयशीर्षनाम साक्षात्स यज्ञपुरुषस्तपनीयवर्णः । छन्दोमयो मखमयोऽखिलदेवतात्मा वाचो बभूवुरुशतीः श्वसतो नमस्ते" इति वेदात्मकत्वेन वेदप्रवर्तकत्वेन प्रतिपादनाद्धयग्रीवब्रह्मणो मन्त्रस्य विद्या सञ्ज्ञा बोध्या ।

यद्वा, श्रीमद्भागवते षष्ठस्कन्धे "स चाधिगतो दध्यङ्ङश्विभ्यां ब्रह्मनिष्कलम् । यद्वा अश्वशिरो नाम तयोरमरतां व्यधात् । दध्यङ्ङाथर्वणस्त्वष्ट्रे वर्मामेद्यं मदात्मकम् । विश्वरूपाय यत्प्रादात्त्वष्टा यत्त्वमधारयत्" इत्यत्र श्रीधरैर्व्याख्यातम् ।

एवं ह्यत्र प्रसिद्धा कथा । "निशम्याथर्वणं दक्षं प्रवर्ग्यब्रह्मविद्ययोः । दध्यञ्चं समुपागम्य तमूचतुरथाश्विनौ । भगवन्देहिनौ विद्याविति श्रुत्वा स चाब्रवीत् । कर्मण्यवस्थितोऽद्याहं पश्चाद्वक्ष्यामि गच्छताम् । तयोर्निर्गतयोरेवं शक्र आगत्य तं मुनिम् । उवाच भिषजोर्विद्यामवादीरश्विनोर्मुने । यदि मद्वाक्यमुल्लङ्घ्य ब्रवीषि सहसैव ते । शिरश्छिन्द्यां न सन्देह इत्युक्त्वा प्रययौ हरिः । इन्द्रे गते तथाऽभ्येत्य नासत्यावूचतुर्द्विजम् । तन्मुखादिन्द्रगदितं श्रुत्वा तावूचतुः पुनः । आवां तव शिरश्छित्त्वा पूर्वमश्वस्य मस्तकम् । सन्धास्यावस्ततो ब्रूहि तेन विद्यां च नौ द्विज । तस्मिन्निन्द्रेण संछिन्ने पुनः सन्धाय मस्तकम् । निजं ते, दक्षिणां दत्त्वा गमिष्यावो यथागतम् । एतच्छ्रुत्वा तयोवाच दध्यङ्ङाथर्वणस्तयोः । प्रवर्ग्यब्रह्मविद्यां च सत्कृतौ सत्यशङ्कितः" इति । ततश्चायमर्थः, दध्यङ् निष्कलं शुद्धं ब्रह्म अधिगतः । पाठान्तरे तु नितरां कृतं भवति धनं येन तं प्रवर्ग्यं चाधिगतः ज्ञातवान् । ततोऽश्विभ्यां प्रादादित्यनुषङ्गः । उपदिदेशेत्यर्थः । कथम्भूतं ब्रह्म? अश्वशिरसा प्रोक्तत्वादश्वशिरोनाम प्रसिद्धम् । तयोरमरतां जीवन्मुक्ततां व्यधादिति । तथा च श्रुतिः "अश्वस्य शीर्ष्णा प्रयदीमुवाच" इति । मदात्मकं वर्म नारायणकवचमधिगत इति पूर्वस्यानुषङ्गः । यथसांस्त्वष्ट्रे प्रादात् । किं तत् यत्त्वष्टा विश्वरूपाय पुत्राय प्रादात् । कीदृशम्? यत्वं ततो विश्वरूपादधाः धृतवानसि । तदेवं विद्यया सारं वाचं याचध्वमित्यर्थ इति । अत्र निष्कलमित्यनेन "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति श्रुत्युक्तं गृहीतम् । तदेव ब्रह्मविद्यापदाभिधेयम् । तदेवाश्विभ्यां प्रादात् । तदेव त्वष्ट्रे, इत्यादिना निरूपितम् । अत एव मदात्मकं वर्मेत्युक्तम् । नारायणस्य शुद्धब्रह्मात्मकत्वेन तत्प्रतिपादककवचस्य तदात्मकत्वेन ब्रह्मविद्यात्मकं नारायणकवचं दध्यङ्ङाथर्वणहयग्रीवप्रोक्तब्रह्मविद्यारूपम् । अत एव टीकाश्लोकेषु ब्रह्मविद्यापदेनोपादानम् ।

किञ्च, "जपन्नेकाक्षरं मन्त्रं मायाबीजात्मकं मम" इति देवीभागवतश्लोकेन मन्त्रत्वेन निरूपणात् । श्रीभागवते तु षष्ठे सप्तमाध्याये "क्षुरद्विषां श्रियं गुप्तामौशनस्यापि विद्यया । अच्छिद्याऽदान्महेन्द्राय वैष्णव्या विद्यया विभुः" इति । न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत्" "एतां विद्यां पुरा कश्चित्" इत्यादिषु विद्यापदोपादानेन प्रतिपदोक्तस्यातिदेशिकेन बाधायोगात् । एतेन शारदातिलकवचनं प्रायिकं तद्भिन्नविषयं चेति बोध्यम् । एतेन हयग्रीवब्रह्मणोपदिष्टा विद्येत्यर्थोऽपि बोध्यः ।

किञ्च, "हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा" इति साहचर्येण हयग्रीवप्रोक्तब्रह्मविद्या सहकृतो यत्र वृत्रवधो "महापुरुषस्तम्भः" इत्यादिवचनबोधितस्तथा वृत्रवधसहचरितहयग्रीवब्रह्मविद्या नारायणकवचात्मिका यत्र तदेव श्रीमद्भागवतमिति परस्परसाहचर्यादिदं फलितम् ।

यद्वा, हयग्रीवब्रह्मणोर्विद्या । द्वन्द्वान्ते श्रूयमाणत्वेन हयग्रीवविद्या या नारायणकवचरूपा, ब्रह्मविद्या वेदस्तुतिरूपा "ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह" इत्यादिश्रुतिषु ब्रह्मविद्याशब्दो ब्रह्मविद्यापरो, न तदेकविद्यापरो, येन शारदातिलकवचनाक्रान्तो भवेत् ।

यद्वा, हयग्रीवो भगवान् ब्रह्मविद्या वेदस्तुलादिरूपा। बहुवचनं तु "सैषा भार्गवी वारुणी विद्या" इत्याद्यनेकोपनिषदां सङ्ग्रहाय। श्रीमद्भागवतस्य वेदसम्मितत्वेन वेदात्मकहयग्रीववर्णनस्यावश्यकत्वात्। ततश्च ब्रह्मविद्यासहचारितो भगवानेव ग्राह्यो न दैत्यः। तस्माद्धयग्रीवब्रह्मविद्या श्रीमद्भागवत एव न देवीभागवते इति निर्मत्सरं विभावनीयं वेदानुसारिभिः।

यत्त्वादित्यपुराणदृष्ट्यापि देवीभागवतमेव महापुराणम्—तथाहि—आदित्यपुराणे रक्तासुरवधप्रस्तावे "आजघ्ने महिषं दैत्यं क्रूरं वृत्रासुरं तथा। साऽद्य रक्तासुरं हत्वा स्वराज्यं ते प्रदास्यति" इति वचनम्। अनेन वचनेन देवी भागवते स्वसम्मतिर्दर्शिता। न हि देवीभागवतातिरिक्तसर्वपुराणे देवीकृतो वृत्रवधः क्वचिदप्यस्ति। इन्द्रकृतस्यैव तस्य सत्त्वात्। केवलं देवीभागवत एव देवीकृतः सोऽस्ति। तद्ग्रहणे देवीभागवते स्वसम्मतिर्दर्शितेति युक्तमेवेत्याहुः। भास्कराचार्या अपि "वृत्रासुरवधोपेतम्" इति लक्षणे देवीकृतो वृत्रासुरवधो ग्राह्य इत्याहुः।

तन्न, वेदसम्मितत्वकथनेन वेदानुकूलवृत्रावृत्रवधस्यासाधारणधर्मरूपलक्षणत्वेन युक्तत्वात्। वेदे वृत्रासुरवधः स्पष्टं निरूप्यते। तथाच, ऋक्संहितायां षष्ठाष्टके षष्ठाध्याये "वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण" इति श्रूयते। वाजसनेयिनामपि संहितायामस्ति। तैत्तिरीयसंहितायां "इन्द्रः शत्रुरभवत्सम्भवन्नग्नीषोमावभिसमभवत्। स इषुमात्रमिष्टमात्रं विश्वङ्वर्धत। स इमाँल्लोकानवृणोत्। तद्वृत्रस्य वृत्रत्वम्। तस्मादिन्द्रो बिभ्यत्। स प्रजापतिमुपाधावच्छत्रुर्मेऽजनीति। तस्मै वज्रंँसिक्त्वा प्रायच्छदेतेन जहि" इत्यारभ्य "इन्द्रो वृत्रमहं ते देवा वृत्रं हत्वा" इत्यादि "इन्द्रो वृत्रं जघ्निवान्। इन्द्रो वृत्रं हत्वा" इत्यादि "इन्द्रो वृत्रमहं तस्य शीर्षकपालमुदौब्जत्स द्रोणकलशोऽभवत्" इति "इन्द्रो वृत्रमहन्सोऽपोऽभ्यम्रियत सा यन्मेध्यं यज्ञीयंँसदेवमासीत्" इति "इन्द्रो वृत्रमहं तस्य कनीनिका परापतत् तदाञ्जनमभवत्" इत्यादि। अत एव श्रीमद्भागवते "वार्त्रघ्नलिङ्गैस्तमभिष्टुवाना मन्त्रैर्मुदा कुसुमैरभ्यवर्षन्" इतिश्लोकेन स्पष्टं वेदमूलत्वं बोधितम्। वृत्रहन्तृवीर्यप्रकाशका मन्त्रास्तु "वार्त्रहत्याय शवसे पृतनाह्याय च" इत्याद्याः श्रीधरा ऊचुः।

तथाच "हग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा। गायत्र्या च समारम्भस्तद्भागवतमुच्यते" इति लक्षणस्यायमभिप्रायः। हग्रीवब्रह्मविद्येत्यनेन भगवान् प्रतिपाद्यस्तत्प्रतिपादकोपनिषद्भागः क्रोडीकृतः। यज्ञार्थे वेदे वृत्रवधात्तन्निरूपणेन धर्मकाण्डः स्वीकृतः। "गायत्र्या च समारम्भः" इत्यनेन वेदस्य मूलं बोधितम्। तेनादिमध्यावसानेषु वेदार्थो बोधितः। अत एव "वेदार्थैरुपबृंहितम्" इति गारुडे गीयते। नैतादृशो विचारो देवीभागवते किन्तु श्रीमद्भागवत एवेत्यस्य लक्षणस्यात्रैव समन्वयो बोध्यः। हयग्रीवब्रह्मविद्यासहकृतवृत्रवधस्येन्द्रकृतत्वात्तस्यैव सम्भव इत्युक्तं प्राक्। आदित्यपुराणे देवीकृतवृत्रासुरवधोक्त्या देवीभागवतलिङ्गबोधनेऽपि देवीकृतवृत्रासुरवधो यत्र तद्भागवतमिति लक्षणाऽभावान्न देवीभागवतस्य वृत्रासुरवधोपेतत्वमिति लक्षणम्।

यत्त्वनन्तरं च तत्रैव पुराणदानप्रस्तावे "ददाति सूर्यभक्ताय यस्तु भागवतं द्विजः। सर्वपापविनिर्मुक्तः सर्वव्याधिविवर्जितः। जीवेद्वर्षशतं साग्रमन्ते वैवस्वतं पदम्" इति पठितम्। अत्र च स्वसम्मतभागवतं गृहीतुमुचितम्। किञ्चेदं वचनं देवीभागवतपक्ष एव स्वरसतः सङ्गच्छते।

प्रथमश्लोक एकादशद्वादशयोश्च सविस्तरं गायत्रीविधानसहस्रनामादेः कथनात् । सूर्यस्य गायत्रीदेवतात्वात् । तद्भागवतपक्षे वैकुण्ठं गच्छेदित्येव वदेदिति ।

ननु, भ्रमादेव भणितम् । आदित्यपुराणे "यदुक्तं भानुना पूर्वं पुत्राय मनवे द्विजाः । तदहं सम्प्रवक्ष्यामि शृणुध्वं गदतो मम" इति प्रतिज्ञाय "सर्गश्च प्रतिसर्गश्च" इति पञ्चकपुराणलक्षणं निरूप्य "तत्रोपपुराणानां खिलत्वाल्लक्षणं स्मृतम् । ब्राह्मं पुराणं तत्राद्यम्" इत्यष्टादशोपपुराणनिरूपणे वायुपुराणोक्त्या "ततो भागवतं प्रोक्तं भागद्वयविभूषितम्" इति लक्षयित्वा "ददाति सूर्यभक्ताय" इत्यादिनाऽऽदित्यपुराणस्य भागवतत्वबोधनपुरःसरं दानफलबोधनात् । "सूर्यभक्ताय अन्ते वैवस्वतं पदम्" इत्यादिसूर्यसम्बन्धस्यैव स्पष्टं प्रतीतेः । इतरथा देवीभक्ताय देवीलोकं गच्छेदित्युक्तं स्यात् । देवीभागवते गायत्रीविधानसहस्रनामादेः कथनं गायत्रीरूपशक्तिदेवताकत्वेन, न सूर्यदेवताकत्वेन ।

किञ्च "भागद्वयविभूषितम्" इतिलक्षणं देवीभागवते नास्त्येव किन्त्वादित्यपुराण एव । द्वादशस्कन्धात्मकत्वाद्देवीभागवतस्य । आग्रहे तु महापुराणत्वभङ्गः । तस्मादादित्यपुराणात्मकं भागवतम् । "यदिदं कालिकाख्यं च मूलं भागवतम्" इतिकालिकापुराणोक्तगणनायामुपपुराणत्वेन निविशते ।

यत्तु "सारस्वतस्य कल्पस्येति मात्स्यवचनादपि देवीभागवतमेव महापुराणम् । अत्र शैवे प्रकरणशुद्धिः । ऋषय ऊचुः "पुराणसङ्ख्यामाचक्ष्व सूत विस्तरतः क्रमात्" इति मुनिप्रश्नोत्तरं "ब्रह्मणाऽभिहितं पूर्वं यत्पाद्मं" पद्मकल्पवृत्तान्ताश्रयं पाद्मं, वराहकल्पवृत्तान्ताश्रयं वैष्णवं, श्वेतकल्पवृत्तान्ताश्रयं वायवीयमित्येवं तत्तत्कल्पवृत्तान्ताश्रयाणि पुराणान्युक्त्वा तदनन्तरं "यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः । वृत्रासुरवधोपेतं तद्भागवतमिष्यते" इति । "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः । तद्वृत्तान्तोद्भवं लोके तद्भागवतमिष्यते" इत्युक्त्वा ततोऽन्यान्यपि महापुराणान्येव तत्तत्कल्पवृत्तान्ताश्रयाणि दर्शितानि । पश्चादुपपुराणकथनार्थं "उपभेदान्प्रवक्ष्यामि" इति प्रतिज्ञाय पद्मपुराणान्नारसिंहं निर्गतम् । एवं नन्दिसाम्बाऽऽदित्य सम्बकान्युक्त्वाऽन्योपपुराणान्यपि महापुराणेभ्य एव निर्गतानीति । "अष्टादशभ्यस्तु पृथक् पुराणं यत्प्रदर्श्यते । विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम्" इति वचनेन सूत ऋषिरुक्तवान् । ततश्च "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च" इत्यादि पुराणलक्षणान्युक्त्वा "सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः । राजसेषु च कल्पेषु माहात्म्यं ब्रह्मणो विदुः । तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च । सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते" इति वचनेन पुराणप्रतिपाद्यहरिब्रह्माऽग्निहरसरस्वतीपितॄणां सम्बन्धात्कल्पानां सात्त्विकराजसतामससङ्कीर्णत्वभेदेश्चातुर्विध्यमुक्तमिति । तत्र कल्पानां तत्तद्देवतासम्बन्धज्ञानं तु तत्तत्कल्पाश्रितत्तत्पुराणप्रतिपाद्यमुख्यदेवताज्ञानेनैव बोध्यम् । अन्यप्रकारस्य क्वचिदपि पुराणेष्वनुपलम्भात् । तथैवं सति "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः । तद्वृत्तान्तोद्भवं लोके तद्भागवतमिष्यते" इति वचनं भागवतस्य लक्षणप्रतिपादकं प्रतिपादितम् । तदर्थस्तु यथा गरुडस्येदं गारुडः । यथा वाराहकल्प इत्यत्र "वरा-

ह्स्याऽयं वाराहः" इति व्युत्पत्तिः प्रसिद्धा। तद्वदेव सरस्वत्या अयं सारस्वत इति विग्रहः। "सरस्वत्यास्तथा कल्पो गौरीकल्पस्तथैव च" इति कल्पनामसु सरस्वतीकल्पत्वेनैव कथितत्वाच्च। मत्स्यपुराण उपान्त्याध्याये "सङ्कीर्णेषु सरस्वत्याः पितृणां कल्प उच्यते" इति वचनेन तथैवोक्तत्वात्। ब्रह्मविष्णुरुद्राणां कल्पवत् गौरीलक्ष्म्योः कल्पवच्च सरस्वतीकल्पस्याऽर्थप्राप्तत्वाच्च तादृशसारस्वतकल्पसम्बन्धिनो ये देवमनुष्यास्तद्वृत्तान्तस्योर्द्ध्वं उत्पत्तिर्यस्मात्तत्पुराणं भागवतं विदुः, तद्वृत्तान्तप्रदर्शकं यत्पुराणं तद्भागवतसञ्ज्ञकमिति यावत्। अत्र च तत्तद्देवतानामाविर्भावाश्रया ये कल्पास्ते तत्तन्नाम्ना व्यवह्रियन्ते। एतच्च तत्तन्नामककल्पाश्रितेषु पुराणेषु तत्तद्देवताया मुख्यत्वेनोत्पत्तिप्रदर्शकवाक्यैर्लक्ष्मीकल्पादिकल्पाश्रितकूर्मपुराणादिषु सर्वत्र प्रसिद्धमेव। तथाच मुख्यत्वेन सरस्वत्या आविर्भावप्रतिपादकं पुराणं यत्तद्भागवतमिति रहस्यार्थः। सारस्वतकल्प इति पदेनैव कल्पस्य सरस्वतीसम्बन्धे बोधिते तस्य सङ्कीर्णत्वम्। "सङ्कीर्णेषु सरस्वत्याः" इति वचनेश्वरप्रेरणां विनापि गृहागतमेव। अस्मिँश्च वचने भागवतपदेन विष्णुभागवतस्य ग्रहणं वन्ध्यापुत्रोपममेव। तस्य मुख्यत्वेन सरस्वत्याविर्भावस्याऽसत्त्वात्। विष्णुभागवते द्वितीयस्कन्धे "पाद्मं कल्पमथो शृणु" इति वचनेन स्वमुखेनैव स्वस्य पाद्मकल्पकथाश्रयस्योक्तत्वात्। तद्विरोधाच्च। नच पाद्मकल्प एव सारस्वतः। सरस्वान् समुद्रः, तस्माज्जातं कमलं सारस्वतम्। तस्य कल्प इति व्युत्पत्त्येति वाच्यम्। "पद्मकल्पस्य वृत्तान्ताश्रयं यस्मादुदाहृतम्। तस्मात्पाद्मं समाख्यातम्" इति पूर्वोदाहृतशिवपुराणवचनेन एतदेव "यदा पद्ममभूद्धैरण्यमयं जगत्। तद्वृत्तान्ताश्रयं तद्वत्पाद्ममित्युच्यते बुधैः। पाद्मं तत्पञ्चपञ्चाशत्सहस्राणीह कथ्यते" इति मत्स्यपुराणवचनेन "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नराऽमराः" इति वचनेन पाद्मकल्पसारस्वतकल्पयोः पृथक् कथनात्। किञ्च सारस्वतकल्पपाद्मकल्पयोरेकत्वे पाद्मकल्पस्य प्रतिपादकं पुराणं पाद्मं भागवतं चेत्येव वदेत्। किञ्च पद्मकल्पस्य वृत्तान्तमित्यभिव्यक्तपदार्था ये प्रसिद्धा लोकविश्रुता इति न्यायेन पूर्वं बुद्ध्यारूढं पाद्मशब्दं विहायाऽप्रसिद्धं सारस्वतशब्दं पाद्मशब्दस्य वाचकं कृत्वा सारस्वतपदघटितकल्पने प्रयोजनाऽभावः। किञ्च "सरस्वत्यास्तथा कल्पः" इत्यादेः पूर्वोक्तसारस्वतपदनिरुक्त्यर्थकस्य वचनसमूहस्य विरोधश्च। नच पाद्मकल्पसारस्वतकल्पयोः पृथक्त्वे त्रिंशत् कल्पेषु मत्स्यपुराणान्तिमाध्याये कीर्तितेषु सारस्वतपदेन पाद्मस्य ग्रहणं न स्यादिति वाच्यम्। प्रभासखण्डे त्रिंशत्कल्पेषु विष्णवजकल्पार्चिषकल्पानां ग्रहणेऽपि तेषां कल्पानां यथा मात्स्याऽन्तिमाध्याये न ग्रहणं, तथा पाद्मस्याऽपि न ग्रहणमित्यस्य तुल्यत्वात्। यदि तेषां पर्यायत्वेन कुत्रचिदन्तर्भावः क्रियते तर्ह्यस्याऽपि कुत्रचिदन्तर्भावोऽस्तु। अत एव विष्णुभागवतस्य प्रबन्धटीकाकारेण पितृकल्प एव पूर्वार्धान्ते पद्मस्योद्भवात्पितृकल्पपदेन पाद्मस्य सङ्ग्रहो वेदितव्य इत्युक्तम्। पुराणकल्पकथनप्रस्तावे सारस्वतकल्पपाद्मकल्पयोः पृथक्त्वकरणेन सारस्वतपदेन पाद्मस्य सर्वथा न ग्रहणम्। वस्तुतस्तु त्रिंशत्कल्पा ब्रह्मणस्त्रिंशत्तिथ्यात्मकास्त्रिंशत्तिथिषु प्रतिपदादिषूत्पद्यन्ते। भूः भुवः सुव इत्यादयस्त्रिंशत्कल्पाः। पाद्मादयश्च वायुपुराणोक्तदिनकल्पा ब्रह्मणः प्रतिदिवसेषूत्पद्यन्ते, इति दिनकल्पतिथिकल्पानां सुतरां भेदात्तिथिकल्पेषु दिनकल्पानां पाद्मादीनां न ग्रहणमिति सिद्धान्तः।

यत्तु, विष्णुभागवतस्यारम्भतः पाद्मकल्पकथाश्रयत्वेऽपि श्रीकृष्णजन्मखण्डस्यैव सारस्वतकल्पभवत्वेन तस्य दशमस्कन्धे सत्त्वात् "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नराऽमराः" इति वचनस्य विष्णुभागवतविषयोऽस्तीत्याहुः। तदसत्। श्रीकृष्णजन्मखण्डस्य सारस्वतकल्पभवत्वप्रतिपादकानां वचनानां निर्मूलत्वात्। समूलत्वेऽपि यस्मिन्पुराणे यस्य कल्पस्य प्रथमतः प्रतिपादनं तत्कल्पप्रतिपादकमेव तत्पुराणमिति नियमः। सर्वपुराणेषु तथा दृष्टत्वात्। तथाच श्रीकृष्णजन्मखण्डस्य दशमस्कन्धे विद्यमानत्वेऽपि प्रथमतस्तत्कथाया अभावात्पाद्मकल्पकथायाः प्रथमतो विद्यमानत्वस्य स्वेनैवोक्तत्वाच्च न सारस्वतकल्पस्येति वचनस्य विष्णुभागवतं विषयः।

किञ्च, श्रीकृष्णजन्मखण्डस्य यथा दशमस्कन्धे कथनं, तथा सर्वपुराणेषु तत्कथनं वर्तत एवेति सर्वपुराणानां तद्वचनविषयत्वं स्यात्। तथाच सर्वपुराणानि भागवतपदवाच्यानि स्युः। तस्मात्सारस्वतस्य कल्पस्य यत्र प्रथमतः प्रतिपादनं स एव तद्वचनस्य विषयो वक्तव्यस्तादृशं च देवीभागवतमेवाऽस्ति, इति देवीभागवतं तद्विषयो वक्तव्य इति।

किञ्च, शिवपुराण उमासंहितायां "ब्रह्मणा संस्तुता सेयं मधुकैटभनाशने। महाविद्या जगद्धात्री सर्वविद्याधिदेवता। द्वादश्यां फाल्गुनस्यैव शुक्लायां समभूत्नृप" इतिवचनात्फाल्गुनशुक्लद्वादश्यां देव्या उद्भवः। तद्दिन एव सारस्वतकल्पोद्भवः। तदुक्तं हेमाद्रौ कल्पश्राद्धप्रकरणे नागरखण्डे "सारस्वतस्तु द्वादश्यां शुक्लायां फाल्गुनस्य च" इति। तथाच सरस्वत्याः कल्प इत्यर्थकस्य "सारस्वतस्य कल्पस्य मध्ये ये स्युर्नराऽमराः" इति वचनस्य सर्वथा देवीभागवतविषयो न विष्णुभागवतमिति बोध्यम्।

किञ्च, तस्य ग्रहणेन तस्य हरिमाहात्म्यप्रतिपादकत्वात्तदाश्रितकल्पस्य सात्त्विकत्वमेवाऽऽयास्यति "सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः" इति वचनात्। ततश्च "सङ्कीर्णेषु सरस्वत्याः" इति वचनेन, सारस्वतकल्प इति नाम्ना च, परमहंस्य सामग्र्येव कर्तव्या स्यात्। अतो विष्णुभागवतं विहाय देवीभागवतमेवास्य वचनस्य विषयोऽनिच्छताऽपि वक्तव्यस्तस्मात् "सारस्वतस्य कल्पस्य" इति वचनाद्देवीभागवतमेव महापुराणम्। अस्ति चात्र सरस्वत्याविर्भावप्रतिपादकं वचनम्। तदुक्तं देवीभागवते प्रथमस्कन्धे "तस्यास्तु सात्त्विकी शक्ती राजसी तामसी तथा। महालक्ष्मीः सरस्वती महाकालीति तास्त्रयः। तासां तिसृणां शक्तीनां देहाङ्गीकारलक्षणः। सृष्ट्यर्थं च समाख्यातः सर्गः शास्त्रविशारदैः" इत्यादि।

तद्भ्रमसात्। यतो मत्स्यपुराणोक्तपुराणलक्षणविचारेण तदुक्तकल्पविचारेण बृहद्वामनपुराणसन्दर्भविचारेण च "सारस्वतकल्पस्ये"ति वचनं श्रीमद्भागवतस्यैव विषयो न देवीभागवतस्येति। तथाहि—मत्स्यपुराणे "कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो द्विजाः। व्यासरूपमहं कृत्वा संहरामि युगे युगे। चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा। तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन्प्रभाष्यते। अद्याप्यमर्त्यलोके तु शतकोटिप्रविस्तरम्। तदर्थो हि चतुर्लक्षे संक्षेपेण निवेशितः। पुराणानि

१. उत्तरपदः। २. मत्स्यपुराणोक्तकल्पविचारेण बृहद्वामनपुराणसन्दर्भविचारेण सम्पूर्णविचारेण तदुक्तसारस्वतेत्यादिः ख-पुस्तके पाठः।

दशाष्टौ च साम्प्रतं तदिहोच्यते। नामतस्तानि वक्ष्यामि शृणुध्वमृषिसत्तमाः। ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये। ब्राह्मं तद्दशसाहस्रं पुराणं परिकीर्तितम्। एतदेव यदा पद्ममभूद्धैरण्मयं जगत्। तद्वृत्तान्ताश्रयं तद्वत्पाद्ममित्युच्यते बुधैः। पाद्मं तु पञ्चपञ्चाशत्सहस्राणीह पठ्यते। वाराहकल्पवृत्तान्तमधिकृत्य पराशरः। यत्राह धर्मानखिलान् तदुक्तं वैष्णवं विदुः। त्रयोविंशतिसाहस्रं तत्प्रमाणं विदुर्बुधाः। श्वेतकल्पप्रसङ्गेन धर्मान्वायुरिहाऽब्रवीत्। यत्र तद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम्। चतुर्विंशसहस्राणि पुराणं तदिहोच्यते। यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः। वृत्रासुरवधोपेतं तद्भागवतमुच्यते। सारस्वतस्य कल्पस्य मध्ये ये स्युर्नराऽमराः। तद्वृत्तान्तोद्भवं यच्च पुराणं परिकीर्तितम्। अष्टादशसहस्राणि पुराणं तत्प्रकीर्तितम्। यत्राह नारदो धर्मान् बृहत्कल्पाश्रयाँस्त्विह। पञ्चविंशत्सहस्राणि नारदीयं तदुच्यते। यत्राधिकृत्य शकुनीन् धर्माऽधर्मविचारणम्। व्याख्यातं जैमिनिप्रश्ने पक्षिभिर्धर्मचारिभिः। मार्कण्डेयेन कथितं तत्सर्वं विस्तरेण तु। पुराणं नवसाहस्रं बह्वर्थं तदिहोच्यते। यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च। वशिष्ठायाऽग्निना प्रोक्तमाग्नेयं तत्प्रकीर्तितम्। तच्च षोडशसाहस्रं सर्वक्रतुफलप्रदम्। यत्राऽधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः। अघोरकल्पवृत्तान्तप्रसङ्गेन गतिं स्थितिम्। मनवे कथयामास भूतग्रामस्य लक्षणम्। चतुर्दशसहस्राणि तथा पञ्चशतानि च। भविष्यचरितप्रायं भविष्यं तदिहोच्यते। रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च सावर्णिना नारदाय कृष्णमाहात्म्यसंयुतम्। यत्र ब्रह्मवराहस्य चरितं वर्ण्यते मुहुः। तदष्टादशसाहस्रं ब्रह्मवैवर्तमुच्यते। यत्राऽग्निलिङ्गमध्यस्थः प्राह देवो महेश्वरः। धर्माऽर्थकाममोक्षार्थमाग्नेयमधिकृत्य च। कल्पान्ते लिङ्गमित्युक्तं पुराणं ब्रह्मणा स्वयम्। तदेकादशसाहस्रं फाल्गुन्यां यः प्रयच्छति। महावराहं तु पुनर्माहात्म्यमधिकृत्य च। विष्णुनाऽभिहितं क्षोण्यै तद्वाराहमिहोच्यते। मानवस्य प्रसङ्गेन कल्पं च मुनिसत्तमाः। चतुर्विंशत्सहस्राणि तत्पुराणमिहोच्यते। यत्र माहेश्वरान् धर्मानधिकृत्य च षण्मुखः। कल्पे तत्पुरुषे वृत्ते चरितैरुपबृंहितम्। स्कान्दं नाम पुराणं तदेकाशीति निगद्यते। सहस्राणि शतं चैकमिति मर्त्येषु पठ्यते। त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः। त्रिवर्गमभ्यधात्तच्च वामनं परिकीर्तितम्। पुराणं दशसाहस्रं कूर्मकल्पानुगं शिवम्। यत्र धर्मार्थकामानां मोक्षस्य च रसातले। माहात्म्यं कथयामास कूर्मरूपी जनार्दनः। इन्द्रद्युम्नप्रसङ्गेन ऋषीणां शक्रसन्निधौ। सप्तदशसहस्राणि लक्ष्मीकल्पाऽनुषङ्गिकम्। श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः। मत्स्यरूपी च मनवे नरसिंहोपवर्णनम्। अधिकृत्याऽब्रवीत्सप्तकल्पवृत्तं मुनिव्रतम्। तन्मात्स्यमिति जानीध्वं सहस्राणि चतुर्दश। यदा च गारुडे कल्पे विश्वाण्डं गरुडोद्भवम्। अधिकृत्याऽब्रवीत् कृष्णो गारुडं तदिहोच्यते। तदष्टादश चैकं तु सहस्राणीह पठ्यते। ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्याऽब्रवीत्पुनः। तच्च द्वादशसाहस्रं पुराणं द्विशतानि च। भविष्याणां च कल्पानां श्रूयते यत्र विस्तरः। तद्ब्रह्माण्डपुराणं तु ब्रह्मणा[1] समुदाहृतम्" इति। अत्र "यत्राऽधिकृत्य गायत्रीम्" इतिश्लोकस्य सर्वथा श्रीमद्भागवतपरत्वस्य पूर्वं निश्चितत्वेन तदुत्तरस्य "सारस्वतस्य कल्पस्य" इति श्लोकस्य देवीभागवतबोधकत्वमर्धजरतीयं कथं भवेत्?

1. तत्पुरुषवृत्तचरितैरिति कदाचित्सम्भवेत्।

किञ्च, "यत्राऽधिकृत्य" इति श्लोकोक्तधर्मवत एव "सारस्वतस्य" इति श्लोकोक्तधर्मवत्त्वम् । तच्च "पुराण"मिति पदेन बोध्यते । किञ्च गरुडस्याऽयं गारुडः वराहस्याऽयं वाराह इतिवत् सरस्वत्या अयं सारस्वत इति व्युत्पत्तिप्रदर्शनेन, सरस्वत्याः सङ्कीर्णेषु माहात्म्यात्सारस्वतस्य सङ्कीर्णत्वात्सरस्वतीप्रतिपादनं देवीभागवत एवेति युक्तिर्न साधयसी । वैष्णवपुराणस्य वराहकल्पवृत्तान्ताश्रयत्वेन वाराहपुराणस्य मानवकल्पवृत्तान्ताश्रयत्वेन योगस्याऽयोगात् । श्वेतबृहदीशानाघोररथन्तरकूर्मलक्ष्मीसह्यकल्पादिषु सर्वत्र योगस्याऽभावात् । "सरस्वत्यास्तथा कल्पः" इति वचनस्य विचारोऽग्रे स्फुटीभविष्यति ।

किञ्च, देवीभागवतस्य सङ्कीर्णत्वे त्वदुक्त्या समागते व्यासकृताऽष्टादशपुराणबहिर्भावापत्तेः ॥ तामससात्त्विकराजसभेदेनैकैकषट्कस्य प्रतिपादनात् । पाद्मोत्तरखण्डीयशिवोमासम्वादे द्विचत्वारिंशाध्याये । "मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च । आग्नेयं च षडेतानि तामसानि निबोध मे । वैष्णवं नारदीयं च तथा भागवतं शुभम् । गारुडं च तथा पाद्मं वाराहं शुभदर्शन । सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै । ब्रह्माण्डं ब्रह्मवैवर्त्तं मार्कण्डेयं तथैव च । भविष्यं वामनं ब्राह्मं राजसानि निबोध मे" इति वचनैः । तथाच हरिमाहात्म्यस्य सात्त्विकत्वेन तत्प्रतिपादकश्रीमद्भागवतस्य च सात्त्विकत्वेनाऽनिच्छताऽप्यष्टादशपुराणगणनायामङ्गीकरणीयत्वात् । देवीभागवतस्य तु भवतैवाष्टादशपुराणबहिर्भावसाधनात् । यतस्तस्य सङ्कीर्णस्य प्रतिपादनात् ।

किञ्च, यद्भवता वैष्णवपुराणेषु सात्त्विकत्वं शैवपुराणेषु तामसत्वं, वैष्णवपुराणमतेन, शैवपुराणेषु सात्त्विकत्वं, वैष्णवपुराणेषु तामसत्वं, "दश शैवपुराणानि सात्त्विकानि विदुर्बुधाः । तामसानि च चत्वारि वैष्णवानि प्रचक्षते" इति स्कान्दे, शैवपुराणमतेनेत्येवं प्रकारेण प्रतिपादितम् । तेनाप्यष्टादशपुराणबहिर्भाव एव साधितो देवीभागवतस्य । यतो दशसात्त्विकानि, चत्वारि तामसानि, चत्वारि राजसानीति पुराणावलोकनेन ज्ञेयम् ।

किञ्च, सारस्वतकल्पस्य सङ्कीर्णत्वकथनं मत्स्यपुराणकल्पानुकीर्तन उपाध्यायाऽध्यायविरुद्धम् । तथाहि—तत्र "प्रथमः श्वेतकल्पस्तु द्वितीयो नीललोहितः । वामदेवस्तृतीयस्तु ततो रथन्तरः परः । रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः । सप्तमोऽथ बृहत्कल्पः कन्दर्पोऽष्टम उच्यते । सद्योऽथ नवमः प्रोक्त ईशानो दशमः स्मृतः । व्यान एकादशः प्रोक्तस्तथा सारस्वतोऽपरः । त्रयोदश उदानस्तु गारुडोऽथ चतुर्दशः । कौर्मः पञ्चदशः प्रोक्तः पौर्णमासी प्रजापतेः । षोडशो नारसिंहस्तु वामनस्तु ततोऽपरः । आग्नेयोऽष्टादशः प्रोक्तः सोमकल्पस्तथाऽपरः । मानवो विंशमः प्रोक्त उदान इति चाऽपरः । वैकुण्ठश्चाऽपरस्तद्वल्लक्ष्मीकल्पस्तथाऽपरः । चतुर्विंशतिमः प्रोक्तः सावित्रीकल्पसञ्ज्ञकः । पञ्चविंशतिमोऽघोरो वाराहस्तु तथाऽपरः । सप्तविंशोऽथ वैराजो गौरीकल्पस्तथाऽपरः । माहेश्वरस्ततः प्रोक्तस्त्रिपुरो यत्र घातितः । पितृकल्पस्तथैवाऽन्त्यो या कुहूर्ब्रह्मणः स्मृता । इत्येवं ब्रह्मणो मासः सर्वपातकनाशनः । आदावेवाऽहि माहात्म्यं यस्मिन् यस्य विधीयते । तस्य कल्पस्य तं नाम विहितं ब्रह्मणा पुरा" इति । तत्रैवाऽग्रे "सङ्कीर्णा-

१ समान इति पाठः ।

स्तामसाश्चैव राजसाः सात्त्विकास्तथा। रजस्तमोमयास्तद्वत्त्रयस्त्रय उदाहृताः। सङ्कीर्णेषु सरस्वत्याः पितॄणां व्युष्टिरुच्यते"। व्युष्टिर्माहात्म्यम्। "*अग्नेः शिवस्य माहात्म्यं तामसेषूपवर्ण्यते*। सात्त्विकेष्वधिकं तद्वद्विष्णोर्माहात्म्यमुच्यते। तत्रैव योगसंसिद्धा गमिष्यन्ति परां गतिम्" इति।

अत्र सङ्कीर्णादयः पञ्चकत्रिकात्मकास्त्रयस्त्रय उदाहृता इत्युक्तेरेवं सिद्धम्—श्वेतो, नीललोहितो, वामदेव इतित्रयः सङ्कीर्णाः। रथन्तरो, रौरवः, प्राण इति त्रयस्तामसाः। बृहद्, कन्दर्पः, सद्य इति त्रयो राजसाः। ईशानो, व्यानः, सारस्वत इति त्रयः सात्त्विकाः। उदानो, गारुडः, कौर्म इति त्रयो रजस्तमोमयाः। एवमवशिष्टेषु नारसिंहमारभ्य पितृकल्पपर्यन्तेषु पञ्चदशसु विभागो बोध्यः। एवं पक्षद्वयात्मको ब्रह्मणो मासः।

अत्र केचिच्छिष्टास्तु सत्त्वस्य निवेशक्रमेण "रजःसत्त्वतमोमयाः" इति तेन गारुडस्य सात्त्विकत्वम्। तेन गारुडकल्पोक्तवृत्तान्तबोधकगारुडपुराणस्य पाद्मे सात्त्विकत्वेनोच्यमानत्वात्। इतरथा केनाऽपि प्रकारेण गारुडस्य सात्त्विकत्वं नैव सिध्येदित्याहुः। एवमुद्देशनिरूपणक्रमेण सङ्कीर्णादिषु सरस्वत्यादीनां माहात्म्यनिरूपणाद्विष्णोर्माहात्म्यं सात्त्विकेषूच्यते। मात्स्य एव सङ्ख्यानुक्रमणिकाध्यायेऽपि "सात्त्विकेषु तु कल्पेषु माहात्म्यमधिकं हरेः। राजसेषु तु माहात्म्यमधिकं ब्रह्मणो विदुः। तद्वदग्नेस्तु माहात्म्यं तामसेषु शिवस्य च। सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते" इत्युक्तम्। न चैतद्वचनक्रमानुरोधात्सारस्वतस्य सङ्कीर्णत्वमिति वाच्यम्। एतद्वचनस्य सङ्कीर्णादिषु प्रतिपाद्यस्वरूपप्रदर्शनपरत्वात्। अन्यथा पूर्वोदितवचनेषु सङ्कीर्णादिक्रमोद्देशस्य तद्वृत्तान्तक्रमस्य च बाधापत्तेः।

किञ्च, यथा "अक्ताः शर्करा उपदधाति" इत्यत्र "तेजो वै घृतम्" इति वाक्यशेषस्य निर्णायकत्वेन घृताऽक्तोपधानम्। तथाऽत्र वाक्यशेषोक्तक्रमस्यैव ग्राह्यत्वम्। किञ्च, सात्त्विकादिक्रमाङ्गीकारे चतुर्णामेव ग्रहणे चतुर्भिस्त्रिंशतां समावेशस्य क्लिष्टत्वापत्तेः। रजस्तमोमयप्रतिपादनस्य 'त्रयस्त्रय उदाहृताः" इत्यस्य विरोधो दुर्वारश्च स्यात्। एतेन सात्त्विकराजसतामसभेदैश्चातुर्विध्यमुक्तवान् इति परास्तम्। न च रुद्रमहात्म्यस्य तामसकल्पीयत्वेन श्वेतकल्पप्रसङ्गेन "धर्मान् वायुरिहाब्रवीत्। यत्र तद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम्"इति वचनविरोधः श्वेतकल्पस्य सङ्कीर्णत्वेनाऽङ्गीकारादिति वाच्यम्। "सात्त्विकेष्वधिकं तद्वत्"इति वचने "तद्वत्" इति पदेन, "महात्म्यमधिकं हरेः" इति, "अधिकं ब्रह्मणो विदुः"इत्युक्तेश्चाऽधिकपदोपादानेन, तद्वग्नेः शिवस्य चेत्यत्र तद्वत्पदोपादानात्पितॄणां चेत्यत्र चकारेण चाधिक्येन सरस्वत्यादीनां माहात्म्यबोधनेनाऽन्येषामपि माहात्म्यबोधनात्। न च सङ्कीर्णादिषु चतुर्णां देवानां माहात्म्यबोधनाद्रजस्तमोमयेषु कस्याऽपि माहात्म्याऽनवबोधनात् "रजस्तमोमयाः" इतिपदं विशेषणत्वेन योजनीयमिति वाच्यम्। "रजस्तमोमयास्तद्वदि"त्यत्र तद्वत्पदोपादानवैयर्थ्यापत्तेः। "त्रयस्त्रय उदाहृताः" इति त्रिंशतां सङ्ख्याबोधनाऽनुपपत्तेः। रजस्तमोऽधिष्ठातृब्रह्मादीनां माहात्म्यबोधनस्य प्राप्त्याऽनुक्तसिद्धेः। तस्माद्वाक्यशेषोक्तयथाश्रुतक्रमस्य जागरूकतया सारस्वतकल्पस्य सात्त्विकत्वे निष्प्रतिबन्धके सिद्धे तस्य सङ्कीर्णत्वकथनं गगनकुसुमायमानमेव। एतेन 'सारस्वतकल्पः

इति पदेनैव कल्पस्य सारस्वतसम्बन्धे बोधिते तस्य सङ्कीर्णत्वं "सङ्कीर्णेषु सरस्वत्याः" इति वचनेनेश्वरप्रेरणां विनाऽपि गृहागतमेव । अस्मिंश्च वचने भागवतपदेन विष्णुभागवतस्य ग्रहणं वन्ध्यापुत्रोपममेवेति निरस्तम् ।

किञ्च, श्वेतादितिथिकल्पेषूत्पद्यमाना दिनमध्यकल्पा भिन्नाः । तथा च—"सरस्वत्यास्तथा कल्पः" इति वचनेन सरस्वतीकल्पो भिन्न एव । यथा पुराणान्तरे क्वापि मयूरकल्पः । तथाच वाराहपुराणे मेघवाहनकल्प उक्तः प्रागितिहासे रुद्रगीतासु यत्र भगवान् "त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय । अतथ्यानि वितथ्यानि दर्शयस्व महाभुज" इत्यादिरुद्रमाज्ञप्तवान् । रुद्रश्च तन्निर्वाहाय "मां वह" इति प्रार्थितवान् । तदा भगवान् मेघो भूत्वा कल्पमेकं रुद्रमवहत् । स मेघवाहनकल्पः । तस्य तिथिरूपेष्वगणनात्तस्मिन् ब्रह्माण्डकरणाऽनुक्तेश्च, वराहपुराणलक्षणे महावराहकल्पाश्रितत्वकथनादेवं सति दिनमाध्यमिकत्वमायाति । एवमन्यत्राऽपि बोध्यम् ।

यच्चात्र तत्तद्देवतानामाविर्भावाश्रया ये कल्पास्ते तत्तन्नाम्ना व्यवह्रियन्ते । एतच्च तत्तन्नायककल्पाश्रितेषु पुराणेषु तत्तद्देवताया एव मुख्यत्वेनोत्पत्तिप्रदर्शकवाक्यैर्लक्ष्मीकल्पाश्रितकूर्मादिषु सर्वत्र प्रसिद्धमेवेत्युक्तम् ।

तदपि न साधीयः । अघोरकल्पवृत्तान्तबोधके भविष्येऽघोरापरपर्यायशिवस्य मुख्यत्वेनाऽऽविर्भावे माहात्म्ये च प्रतिपादनीये "यत्राऽधिकृत्य माहात्म्यमादित्यस्य चतुर्मुखः । अघोरकल्पवृत्तान्तप्रसङ्गेन" इत्यादि मात्स्यवाक्येनाऽऽदित्यमाहात्म्यप्रतिपादनस्य बोधनात् । एवं लक्ष्मीकल्पाऽनुगकूर्मपुराणे लक्ष्म्याः प्राधान्ये महात्म्ये च वर्णनीये शिवस्य प्राधान्येन महात्म्यस्य वर्णनात् । तथा च कूर्मपुराणे पूर्वभागे चतुर्थोऽध्याये "कुतः सर्वमिदं जातं कस्मिंश्च लयमेष्यति । नियन्ता कश्च सर्वेषां वदस्व पुरुषोत्तम । श्रुत्वा नारायणो वाक्यमृषीणां कूर्मरूपधृक् । प्राह गम्भीरया वाचा भूतानां प्रभवाऽव्ययौ । कूर्म उवाच । माहेश्वरः परोऽव्यक्तश्चतुर्व्यूहः सनातनः । अनन्तश्चाऽप्रमेयश्च नियन्ता विश्वतो मुखः" इत्यारभ्य "निशान्ते प्रतिबुद्धोऽसौ जगदादिरनादिमान् । सर्वभूतमयोऽव्यक्तादन्तर्यामीश्वरः परः । प्रकृतिं पुरुषं चैव प्रविश्याऽऽशु महेश्वरः । क्षोभयामास योगेन परेण परमेश्वरः" इत्यादिना चोक्ता, "प्रधानात्क्षोभ्यमानाच्च तथा पुंसः पुरातनात् । प्रादुरासीन्महद्बीजं प्रधानपुरुषात्मकम्" इत्यादिना सृष्टिरुक्ता, ततः पञ्चदशाऽध्यायोत्तरसुपरिभागे दशभिरध्यायैरीश्वरगीतोक्ता, शिवमाहात्म्यं परब्रह्मरूपता चोक्तेति मुख्यतया शिवमाहात्म्यं प्रतिपादितं, न लक्ष्म्याः, इति लक्ष्मीनामककल्पत्वेन लक्ष्म्याः प्राधान्येन प्रादुर्भावो माहात्म्यं चेति भ्रमादेवोक्तमिति ज्ञेयम् ।

यत्तु, विष्णुभागवते द्वितीयस्कन्धे "पाद्मं कल्पमथो शृणु" इति वचनेन पाद्मस्यैव ...स्य पाद्मकल्पकथाश्रवणमुक्तमिति जगाद । तच्चिन्त्यम् । श्रीमद्भागवते "अयं तु ब्रह्मणः कल्पः सवि... कल्प (सविकल्प) उदाहृतः", "पाद्मं कल्पमथो शृणु", "अयं तु कथितः कल्पो द्वितीयस्याऽपि भारत । वाराह इति विख्यातो यत्रासीत्सूकरो हरिः" इति द्वयानां कल्पानां निरूपणात् । केन... तत्र "चायं तु" इति द्वितीयस्कन्धश्लोके पूर्वं "पूर्वस्यादौ परार्द्धस्य ब्राह्मस्याऽभावात् ।

ब्राह्मो नाम महानभूत्। यत्र कल्पेऽभवद्वेधा शब्दब्रह्मामयःपुरा" इत्यनेन ब्रह्मकल्पवृत्तान्तस्य निरूपणम्। ततश्च द्वितीयस्कन्धान्ते पाद्मं कल्पमथो शृण्विति प्रतिज्ञाय तृतीयस्कन्धे पाद्मनिरूपणोत्तरं वाराहकथानिरूपणे "अयं तु कथितः" इत्यनेन वराहकल्पनिरूपणम्। वाराहकल्पनिर्वचनं "यत्रासीत्" इत्यादिना, ततो वाराहावतारप्रश्ने वाराहावतारनिरूपणमिति वाराहकल्पकथा निरूपिता. ततश्च द्वादशसमाप्तौ कल्पनाम कथनेन "सारस्वतस्ये"तिबोधितवृत्तान्तनिरूपणमिति ज्ञेयम्। एवञ्च, ब्राह्मपाद्मवाराहकल्पानां ब्राह्मपाद्मवैष्णवपुराणप्रसिद्धानामनुवादमात्रमिति निश्चयः। केवलपाद्मकल्पस्यैव कथेति निश्चये त्रयाणां निरूपणविरोधः। न च त्रयाणामेव कथा सम्पूर्णा श्रीमद्भागवत इति वाच्यम्। सङ्क्षेपतेर्निरूपितत्वेन त्रयाणां समाप्तिबोधनात्। एतेन "न च पाद्मकल्प एव सारस्वतः" इत्यारभ्य "सारस्वतपदेन पाद्मस्य सर्वथा न ग्रहणम्" इत्यन्तं कथनं गगनकुसुमसौरभ्यसदक्षं काकदन्तपरीक्षाऽनुसारित्वात्परास्तम्।

यदपि "विष्णुभागवतस्य पाद्मकल्पकथाश्रयत्वमि"ति तदपि निरस्तम्। "पाद्मं कल्पमथो शृणु" इत्यत्राऽथोपदवैय्यर्थ्याच्च। यदपि श्रीकृष्णजन्मखण्डस्यैव सारस्वतकल्पभवत्वेन तस्य दशमस्कन्धे सत्त्वात् "सारस्वतस्य"इति वचनस्य विष्णुभागवतं विषय इति शङ्काग्रन्थस्य "तदसदि"त्यारभ्य "देवीभागवतमेव तद्विषयो वक्तव्यः" इत्यन्तं खण्डनग्रन्थस्य निरूपणं तदपि शशस्य निजशृङ्गभिया विशालकन्दराप्रवेशवद्भाति। यतः "रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च। सावर्णिना नारदाय कृष्णमाहात्म्यसंयुतम्। यत्र ब्रह्मवराहस्य चरितं वर्ण्यते मुहुः। तदष्टादशसाहस्रं ब्रह्मवैवर्त्तमुच्यते" इति मत्स्यपुराणवचनेन ब्रह्मप्रकृतिगणपतिश्रीकृष्णजन्माख्यखण्डचतुष्कविशिष्टब्रह्मवैवर्तपुराणस्य रथन्तरकल्पाश्रितवृत्तान्तबोधकत्वात्।

यदपि "ब्रह्मणा संस्तुता" इति शिवपुराणस्थोमासंहितावचनात्फाल्गुनशुद्धद्वादश्यां[1] देव्या उद्भवः। तद्दिन एव सारस्वतकल्पोद्भवः "सारस्वतस्तु द्वादश्याम्"इति हेमाद्रिधृतनागरखण्डवचनात्। तथाच सरस्वत्याः कल्प इत्यर्थके "सारस्वतस्य कल्पस्ये"ति वचनं सर्वथा देवीभागवतविषयो न विष्णुभागवतमित्युक्तम्, तदपि न; "युष्माकं बदरीचक्रमस्माकं बदरीगृहम्" इति बादरायणसम्बन्धसदृशत्वात्।

किञ्च, मधुकैटभनाशाय तस्य उद्भवोक्तेः का व्यवस्था विधीयते। अत एव सप्तशतीप्रथमचरितस्य काली देवतेति कात्यायनीतन्त्रादिषु स्फुटम्। एतेन देवीभागवतप्रथमस्कन्धे महालक्ष्म्यादीनां सर्ग उक्तः। ततश्च सरस्वत्याऽऽविर्भावप्रतिपादकत्वमुक्तमिति निरस्तम्। मुख्यत्वेन सरस्वत्या आविर्भावप्रतिपादकत्वमिति भवदुक्तिविरोधाच्च। नात्र सरस्वत्या मुख्यत्वेन प्रतिपादनम्। अस्तु वा यथोक्तम्। परन्तु द्वादश्या विष्णुतिथित्वेन निश्चयाद्वाराहपुराणे धरणीकृते मार्गशीर्षमारभ्योर्जमासपर्यन्तानां शुक्लद्वादशीक्रमेण मत्स्यकूर्मवराहनृसिंहवामनपरशुरामरामश्रीकृष्णबुद्ध[2]कल्किपद्मनाभनारायणदेवताकाः प्रसिद्धाः। तत्र नृसिंहद्वादशीत्वेन नृसिंहदेवताकत्वेन फाल्गुनशुक्लद्वादश्याः प्रसिद्धत्वात्।

१ द्वादश्यामिति कपुस्तकम्। २ बौद्धेति खपुस्तकम्।

किञ्च, योगबाहुल्येन गोविन्दद्वादशीत्वेन प्रसिद्धत्वाच्च पद्मपुराणे, "कुम्भेऽर्के देवपूज्ये यदि धनुषि गते सप्तगे कर्कटस्थे पुष्यार्के फाल्गुने मास्यथ शुभफलदे शोभने शुक्लपक्षे । चेत्स्याद्व्यातिरेकादिह जलधितटे द्वादशी विष्णुतीर्थे गोविन्दद्वादशीयं कलिकलुषहरा विष्णुसायुज्यदात्री" इति ब्रह्माण्डपुराणेऽप्यस्ति लक्षणम् । एवं फाल्गुनशुक्लद्वादश्या अनेकप्रकारेण भगवत्सम्बन्धित्वनिश्चितत्वादेव्युद्भवस्यैकस्य सम्बन्धस्याऽकिञ्चित्करत्वात् । तत्रोद्भूतसारस्वतकल्पस्य सात्त्विकत्वेन तदधिष्ठातृभगवत्प्रतिपादकश्रीमद्भागवतस्य 'सारस्वतस्ये'तिवचनोक्तलक्षणं निराबाधमिति सर्वथैवाऽस्माकमेवेष्टसिद्धिः । यच्च तस्य ग्रहणे हरिमाहात्म्यप्रतिपादकत्वेन सात्त्विकत्वमेवाऽऽयातीत्यापत्तिर्दर्शिता सात्वनुकूलैवेति प्रतिपादितमेव, तस्य सात्त्विकत्वमिति 'सङ्कीर्णेषु सरस्वत्याः' इति वचनस्य न सारस्वतकल्पो विषय इति सिद्धम् ।

केचित्तु, मात्सीयं सारस्वतकल्पवाक्यं न भागवतलक्षणपरम्, लक्षणपरत्वे "यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च । वसिष्ठायाऽग्निना प्रोक्तमाग्नेयं तत्प्रचक्षते" इत्यादिमात्सीयकल्पान्तवाक्यानामपि लक्षणपरत्वस्य वक्तव्यत्वेनाऽऽग्नेयादेरीशानकल्पोक्तिविधुरस्याऽष्टादशबहिर्भावप्रसङ्गात् । किन्तु, मात्सीयकल्पवर्णनाध्यायस्थसङ्कीर्णसात्त्विकराजसकल्पभेदवाक्यवदिमानि पुराणवर्णनाऽध्यायस्थसारस्वतादिकल्पभेदवाक्यान्यपि परस्परविरुद्धवृत्तान्तत्वादिना पुराणवचनानामप्रामाण्यनिरासाय भिन्नभिन्नकल्पवृत्तान्तविषयत्वप्रतिपादनपराण्येव । एवं सति मात्स्यवाक्यैरेव पुराणानां यथोक्तलक्षणादिमानसिद्धभागवतत्वादिविशेषाणां प्रतिनियतकल्पसम्बन्धस्य विधिरस्ति तस्य प्रतीतिनिर्वाहान्न भागवतादौ सारस्वतकल्पोक्त्यपेक्षास्तीत्याहुः । तत्रोक्तव्यवस्थया वक्ष्यमाणबृहद्वामनपुराणसन्दर्भेण च सारस्वतकल्पोक्तवृत्तान्तस्य श्रीमद्भागवतविषयत्वे जागरूकेऽस्याः कल्पनायाः प्रयोजनाऽभावः ।

परे तु, सरस्वतीतीरवासिनां भृग्वादिमुनीनां 'को देवः श्रेष्ठः' इति 'कल्प एव सारस्वतकल्प' इत्यपि वक्तुं शक्यत्वेन भवदभिमते प्रमाणाऽभाव इत्येकया युक्त्या वादिनि प्रतिहते यथाकथञ्चिदुक्तमन्तरकथनमभ्युच्चय इति उक्तलक्षणाऽभ्युच्चयेनैवोपन्यस्तमित्याहुः । अत्र, 'एवं सारस्वता विप्राः' इति श्रीमद्भागवतवचनं मानम् । अस्या अपि कल्पनायाः शिथिलत्वेन पूर्वोक्तैव न्यायः ।

वस्तुतस्तु बृहद्वामनपुराणसन्दर्भेण तु कस्या अपि कल्पनायाः प्रयोजनाभावात्सारस्वतकल्पवृत्तान्तः श्रीमद्भागवतोक्तः स्पष्टमेव प्रतीयते । बृहद्वामनपुराण उत्तरस्थाने शिष्टे च भृगुब्रह्मसम्वादे ब्रह्मणो वाक्यानि "षष्टिवर्षसहस्राणि मया तप्तं तपः पुरा । नन्दगोपव्रजस्त्रीणां पादरेणूपलब्धये । तथापि न मया प्राप्तास्तासां वै पादरेणवः । श्रुत्वेत्थं ब्रह्मणो वाक्यं भृगुः प्राह सादरम् । वैष्णवानां पादरजो गृह्यते त्वद्विधैरपि । सन्ति ते बहवो लोके वैष्णवा नारदादयः । तेषां विहाय गोपीनां पादरेणुस्त्वयाऽपि यत् । गृह्यते संशयो मेऽत्र यो हृत्स्वहद प्रभो । ततो ब्रह्मा भृगुं प्राह चिन्तयित्वा पुरातनीम् । कथां स्वयंश्रुतानां यद्रहस्यं परमाद्भुतम् । ब्रह्मोवाच । न स्त्रियो व्रजसुन्दर्यः पुत्र ताः श्रुतयः किल । नाहं शिवश्च शेषश्च श्रीश्च ताभिः समाः क्वचित् । प्राकृते प्रलये प्राप्ते व्यक्तेऽव्यक्तं गते पुरा । शिष्टे ब्रह्मणि चिन्मात्रे कालमायातिगेऽक्षरे । ब्रह्मा-

नन्दमयो लोको व्यापिवैकुण्ठसञ्ज्ञकः। निर्गुणोऽनाद्यनन्तश्च वर्त्तते केवलेऽक्षरे। अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तमम्। तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः। चिरं स्तुतस्ततस्तुष्टः परोक्षं प्राह तान् गिरा। तुष्टोऽस्मि ब्रूत भोः प्राज्ञा वरं यन्मनसीप्सितम्। श्रुतय ऊचुः। नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत। सगुणं ब्रह्म सर्वेदं वस्तुबुद्धिर्न तेषु नः। ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम्। वाङ्मनोगोचरातीतं ततो न ज्ञायते तु तत्। आनन्दमात्रमिति यद्वदन्ति पुराविदः। तद्रूपं दर्शयाऽस्माकं यदि देयो वरो हि नः। श्रुत्वैतद्दर्शयामास तं लोकं तमसः परम्। केवलानुभवानन्दमात्रमक्षरमव्ययम्। यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमैः। मनोरमनिकुञ्जाढ्यं सर्वत्र कुसुमाकरम्। यत्र गोवर्धनो नाम सुनिर्झरदरीयुतः। रत्नधातुमयः श्रीमान् सुपक्षिगणसङ्कुलः। यत्र निर्मलपानीया कालिन्दी सरितां वरा। रत्नबद्धोभयतटी हंसपद्मालिसङ्कुला। नानारासरसोन्मत्तं यत्र गोपीकदम्बकम्। तत्कदम्बकमध्यस्थः किशोराकृतिरच्युतः। दर्शयित्वेति तं प्राह ब्रूत किं करवाणि वः। दृष्टो मदीयो लोकोऽयं यतो नास्ति परं वरम्। श्रुतय ऊचुः। कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः। कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयम्। यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः। भजन्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा। श्रीभगवानुवाच। दुर्लभो दुर्घटश्चैव युष्माकं सुमनोरथः। मयाऽनुमोदितः सम्यक् सत्यो भवितुमर्हति। आगामिनि विरिञ्चे तु जाते सृष्ट्यर्थमुद्यते। कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ। पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले। वृन्दावने भविष्यामि प्रेयान् वो रासमण्डले। जारधर्मेण सुस्नेहं सुदृढं सर्वतोऽधिकम्। मयि सम्प्राप्य सर्वेऽपि कृतकृत्या भविष्यथ"इत्यत्र स्पष्टं सारस्वतकल्पीयश्रीकृष्णलीलाया उक्तत्वात्सारस्वतकल्पवृत्तान्तबोधकब्रह्मवैवर्ताऽन्तर्गतश्रीकृष्णजन्मखण्डे प्रवेशमलभमानाऽन्यकल्पेष्वप्यन्यकल्पवृत्तान्ताश्रयत्वाच्च कुत्राऽपि प्रवेशमलभमाना श्रीमद्भागवतदशमे स्पष्टं प्रतीयमाना सारस्वतकल्पीयैवेति निश्चीयते। "गोप्यो गाव ऋचस्तस्या (भिन्नभिन्ना एतास्तु) आभिर्भिन्नो न वै प्रभुः। भूमावतारितं सर्वं वैकुण्ठं स्वर्गवासिनाम्"इति कृष्णोपनिषच्छ्रुत्याऽपि। "गोप्यश्च श्रुतयो ज्ञेया ऋषिजा देवकन्याः। मुनिकन्याश्च राजेन्द्र न मानुष्यः कथञ्चन"इति पद्मपुराणवचनेन च व्यापिवैकुण्ठस्यैव, श्रुतयस्तु भगवता प्रकटिततया गोपीनां च श्रुतिरूपत्वेनाऽपि कथनाच्छ्रुतीनां च भगवता गोपीभवनस्य तत्साहित्येन रमणस्य च सारस्वतकल्प उक्तत्वेन श्रीमद्भागवते दशमस्कन्धे कृष्णस्कन्धे "कृष्णं च तत्र च्छन्दोभिः स्तूयमानं सुविस्मितम्" इत्युक्त्वा "मनोरथान्तं श्रुतयो यथा ययुः" इति दृष्टान्तरीत्याऽप्युक्तत्वाद्दशमस्कन्धोक्तचरितस्य सारस्वतकल्पीयत्वनिश्चयात्।

एवञ्च "सरस्वत्यास्तथा कल्पो गौरीकल्पस्तथैव च"इतिवचनस्य वेदात्मकसरस्वत्या इत्यर्थः। ततश्च वेदात्मकसरस्वतीरूपगोपिकानां प्रादुर्भावो यत्र स सारस्वत इति योगोप्यस्माकमनुकूलः। श्रीमद्भागवते प्रथमस्कन्धे "सूत जानासि भद्रं ते, भगवान् सात्त्वतां पतिः। देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया। तन्नः शुश्रूषमाणानामर्हस्यङ्गाऽनुवर्णितुम्। यस्यावतारो भूतानां क्षेमाय च भवाय च" इत्यादिना श्रीकृष्णचरितस्यैव मुख्यतया, शौनकादिभिः प्रष्टत्वेन सूतेन "एते

चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्" इति श्रीकृष्णस्यैवाऽवतारित्वमूलपुरुषत्वबोधनेन, तदवतारनिरूपणेन, तत्कर्तृकसृष्टिनिरूपणेन, तद्भक्तानां माहात्म्यनिरूपणेन, मुख्यतया श्रुतिरूपगोपिकामनोरथपूर्त्यर्थेऽवतीर्णस्य तच्चरितनिरूपणेन, तत्कर्तृकोपदेशनिरूपणेन, "सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम् । सत्यासत्यो हि गोविन्दस्तस्मात्सत्यो हि नामतः" इत्युद्योगपर्ववाक्यात् "सत्यं परं धीमहि" इत्याद्यन्तवाक्येन च सर्वत्र श्रीकृष्णस्यैव माहात्म्यनिरूपणेन तदुपयोगिनरामरवृत्तान्तवर्णनेन "सारस्वतस्य कल्पस्ये"ति श्लोकस्य विषयः श्रीमद्भागवतमेव न देवीभागवतमिति सिद्धम् । एतेन मत्स्यपुराणमते देवीभागवतं महापुराणमिति परास्तम् ।

यत्तु, शैवपुराणमते देवीभागवतं महापुराणमिति । तथाहि—शैवपुराण उत्तरखण्डे मध्यमहेश्वरमाहात्म्ये शिवाल्लब्धवरेण व्यासेन महापुराणानि प्रणीतानीत्युक्त्यनन्तरं तेषां नामान्यष्टादशोक्त्वा तेषां योगरूढानां नाम्नां विवेचनं तत्रैव कृतम् । तद्यथा "यत्र वक्ताऽभवत्तण्डे ब्रह्मा साक्षाच्चतुर्भुजः । तस्माद्ब्राह्मं समाख्यातं पुराणं प्रथमं मुने" । 'तण्ड'इतिमुनिसम्बोधनम् । "पद्मकल्पस्य माहात्म्यं तत्र यस्मादुदाहृतम् । तस्मात्पाद्मं समाख्यातं पुराणं च द्वितीयकम् । पराशरकृतं यच्च पुराणं विष्णुबोधकम् । तदेव व्यासकथितं पुत्रपित्रोरभेदतः । यत्र पूर्वोत्तरे खण्डे शिवस्य चरितं बहु । शैवमेतत्पुराणं हि पुराणज्ञा वदन्ति हि । भगवत्याश्च दुर्गायाश्चरितं यत्र विद्यते । तत्तु भागवतं प्रोक्तं न तु देवीपुराणकम् । नारदोक्तं पुराणं तु नारदीयं प्रचक्षते । यत्र वक्ताऽभवत्तण्डे मार्कण्डेयो महामुनिः । मार्कण्डेयं पुराणं हि तदाख्यानं च सप्तमम् । अग्नियोगात्तदाग्नेयं भविष्योक्तेर्भविष्यकम् । विवर्तनाद्ब्रह्मणस्तु ब्रह्मवैवर्तमुच्यते । लिङ्गस्य चरितोक्तत्वात्पुराणं लिङ्गमुच्यते । वराहस्य च वाराहं पुराणं द्वादशं मुने । यत्र स्कन्दः स्वयं श्रोता वक्ता साक्षान्महेश्वरः । तत्तु स्कान्दं समाख्यातं वामनस्य तु वामनम् । कौर्मं कूर्मस्य चरितं मात्स्यं मत्स्यस्य कीर्तितम् । गरुडस्तु स्वयं वक्ता यत्तद् गारुडसञ्ज्ञकम् । ब्रह्माण्डचरितोक्तत्वाद्ब्रह्माण्डं परिकीर्त्तितमि"ति । अत्र क्वचिद्वक्तृसम्बन्धः, क्वचित्प्रतिपाद्यमुख्यदेवतासम्बन्धः प्रवृत्तिनिमित्तमिति स्पष्टमेव दर्शितम् । तत्र भागवतनाम्नो निर्वचनवाक्यमेतत् । भगवत्याश्च दुर्गायाश्चरितं यत्र विद्यते । तत्तु भागवतं प्रोक्तं न तु देवीपुराणकम्"इति । अनेनात्र निर्वचनवाक्येन भगवत्या इदं भागवतमिति व्युत्पत्त्या ग्रन्थप्रतिपाद्यमुख्यदेवताचरितसम्बन्धः प्रवृत्तिनिमित्तमिति स्पष्टमेव दर्शितम् । का सा भगवतीत्यपेक्षायामाह "दुर्गाया" इति । "तत्तु भागवतमि"ति । तुशब्दो निश्चयार्थः । तदेव भागवतपदवाच्यं प्रोक्तमित्यर्थः । न तु पुराणान्तरमतप्राप्तं विष्णुभागवतम् । महापुराणान्तर्गतभागवतमित्यर्थ इति शैवपुराणेन समतं प्रदर्शितम् । कश्चिदेतत्पुराणान्तरमनेन जानीयात्तत्राह । न तु देवीपुराणकम् । पुराणकमित्यत्र कप्रत्ययोऽल्पार्थकः, "अल्प" इति सूत्रात् । पुराणकमल्पं पुराणमुपपुराणमिति यावत् । देव्याः पुराणकं देवीपुराणकं यदिदमुक्तं तद्देव्या उपपुराणं नैवास्तीत्यर्थः । अनेन च वाक्येनाऽन्यस्य महापुराणत्वनिषेधे स्वाभिप्रेतस्योपपुराणत्वनिषेधेन श्रीमद्देवीभागवतस्यैव महापुराणत्वं बोधयति व्यासः । मुख्यत्वेन भगवतीचरितप्रतिपादकस्य महापुराणमध्ये कस्यचित्पुराणस्य ग्रन्थस्याऽभावात् । ननु नारदादिपुराणवचनव्याहि-

ष्णुभागवतस्य महापुराणान्तर्गतत्वे निर्विघ्नं निश्चिते तद्बलाद्भागवतद्वयस्य मतभेदेन महापुराणकल्पनापेक्षया यत्किञ्चिद्भगवतीचरितस्याऽस्मिन्वचने ग्रहणेनाऽनेन वचनेन विष्णुभागवतनाम्न एव निरुक्तिः कृतेति कुतो न कल्प्यते। वर्तते च तत्र विष्णुभागवते दशमस्कन्धे किञ्चिद्विन्ध्यवासिन्याश्चरितमिति चेन्न, तथा सति मुनेर्विष्णुभागवत्वविषय एव तात्पर्यसत्त्वे भगवत इदं भागवतमित्येव व्युत्पत्तिं कुर्यान्नहि केनचिन्मुनेः शिरसि भारः स्थापितो यत्स्वाऽभिप्रेतां युक्तां निरुक्तिं त्यक्त्वा निष्प्रयोजनाऽनभिप्रेतां निरुक्तिं करोति। किञ्च "यत्र पूर्वोत्तरे खण्डे शिवस्य चरितं बहु। शैवमेतत्पुराणं तु पुराणज्ञा वदन्ति चे"ति वचनैर्बहुचरितस्य मुख्यचरितसम्बन्धरूपप्रवृत्तिनिमित्तस्यैवाभिप्रेतत्वं मुनेरवसीयते। मतभेदेन पुराणभेदकल्पना तु नात्रैव नवीनाऽस्ति। पूर्वोक्तयुक्त्या नारदशैववाय्वादिस्थपुराणेष्वन्यत्राऽपि सत्त्वात्। अस्तु वा गौरवम्। नहि तद्भयान्मुनेस्तात्पर्यमन्यथाकर्तुं कश्चिदीष्टे। तस्मात्पूर्वोक्तं तात्पर्यं विहायान्यतात्पर्येणाऽन्यथाकरणं महासाहसमेव। ननु लक्षणवाक्यमेतत्। ततश्च दुर्गाचरितं यत्र वर्तते तद्भागवतमित्यर्थः। तच्च न देवीभागवतं भवितुमर्हति। तस्य तल्लक्षणलक्ष्यत्वे "न तु देवीपुराणकमि"ति निषेधविषयत्वेन निषेधविध्योः समानविषयत्वापत्तेः। किन्तु विष्णुभागवतमेवेति चेन्न, पूर्वोक्तनिरुक्तिवचनप्रकरणस्यत्वविरोधात्। किञ्च लक्षणवाक्यमेतदिति पक्षेऽप्येतल्लक्षणस्य महापुराणोद्देशेनैव सत्त्वादुपपुराणेष्वस्य प्रसक्त्यभावाद्देवीपुराणकालिकापुराणयोरुपपुराणत्वस्य निश्चितत्वात्तत्रैव तल्लक्षणस्य प्रसक्तिरेव नास्तीति "न तु देवीपुराणकम्"इति निषेधो व्यर्थ एव स्यात्। तस्मादेतद्वचनस्य पूर्वोक्त एवाऽर्थः। किञ्च, लक्षणवाक्यमेतदिति पक्षे यत्किञ्चिच्चरितं ग्राह्यते ?, उत यावच्चरितम् ? यत्किञ्चिच्चरितस्य सर्वपुराणेषु सत्त्वाद्देवीपुराणमात्रनिषेधेन निर्वाहः। तस्माद्देवीपुराणस्यैव निषेधस्वारस्याद्यावच्चरितं मुख्यत्वेन भगवतीचरितमेव ग्राह्यम्। तदा तव नाभीष्टार्थसिद्धिः। मुख्यत्वेन विष्णुभागवते दुर्गाचरितस्याऽभावान्ममैव स्वभीष्टसिद्धिः। निषेधविध्योः समानविषयत्वरूपं दूषणं नैव सम्भवति। प्रकरणबलात्तात्पर्ये निश्चिते तद्विहायैव निषेधप्रवृत्तेः। वृत्रासुरवधोपेतत्वलक्षणं गायत्र्यारम्भविशिष्टमिति तदतिप्रसक्तम्। तस्मात्पूर्वोक्त एतद्वचनार्थ इति तद्वचनाद्देवीभागवतं महापुराणं, न तु विष्णुभागवतमिति शिवपुराणमतम्। अत्र च नियमद्वयस्य पूर्वोक्तस्य सत्त्वाद्विष्णुभागवतविषये नियमद्वयाऽभावादिदं शिवपुराणमतमेव मुख्यम्। अन्यपुराणमतं त्वेकदेशीति नियमद्वयप्रदर्शकव्यासवाक्येन स्पष्टमेव बोधितमिति सुधियो विभावयन्त्वित्याह कश्चित्।

तदसङ्गतम्। अष्टादशपुराणगणनायां पठितस्य भागवतस्योपपुराणत्वाऽप्रसक्त्या निषेधस्य प्राप्तिपूर्वकत्वेन, निषेधाऽयोगात्। कालिकापुराणदेवीपुराणयोरुपपुराणत्वेन महापुराणत्वनिषेधवत्। यदि च देवीभागवत उपपुराणत्वशङ्काप्रहाणाय निषेधसिद्धिस्तदा "नमस्कृत्य शिवां देवीं शर्वं भागवतं तथा। पुराणं सम्प्रवक्ष्यामि यथोक्तमृषिभिः पुरा" इति देवीपुराणप्रारम्भपद्ये भागवतपदरक्षया दुर्गाचरितवत्त्वाऽपि निषेध इत्यस्य वक्तुं शक्यत्वात्। यतश्चोभयं न निषेध्यमप्रसक्तेः। तदा तु देवीभागवते महापुराणत्वप्रसक्त्या तस्यैव निषेधः। देवीभागवतस्य निर्मूलत्ववादिनस्तु नत्विति निषेधस्य पूर्वोऽन्वयित्वं, यतस्तदुपपुराणमिति हेतुगर्भितमुपपुराणकमिति विशेष-

णमिति वदन्तो "नमस्कृत्य" इति वचनबलाद्गङ्गेशोपाध्यायानां देवीपुराणे यो महापुराणत्व-पुरस्सरो भागवतत्वव्यवहारस्तं खण्डयति । केचित्त्वेवमन्वयं वदन्तो देवीभागवतस्योपपुराणत्वं साधयन्ति । परन्त्वेवमन्वये प्रक्रमविरोधो दुर्वारो यतस्तत्र विधायकत्वमेव दृश्यते । ततश्चायमर्थः "विष्णोर्माया भगवती यया सम्मोहितं जगत्" इति श्रीमद्भागवतदशमस्कन्धोक्तभगवतीत्वबोधाय भगवत्या इति तत्रैव प्रभुणा "अर्चिष्यन्ति मनुष्यास्त्वां" "नामधेयानि कुर्वन्ती"त्युक्त्वा "दुर्गेति भद्रकालीति" इत्यादिनामस्वभ्यर्हितत्वेन पूर्वमुक्तस्यैतद्वचने बोधाय 'दुर्गाया' इत्युक्तम् । तादृस्याश्चरितं यत्र, चकाराद्भगवतोऽपि यत्र चरितं तद्भागवतमित्यर्थः । तथा च भगवती च भगवाँश्च भगवन्तौ, भगवतश्चरितं भागवतमिति व्युत्पत्तिः । यदि चैकवचनान्तैव व्युत्पत्तिः, प्राधान्येन भगवत्याश्चरितमित्युच्यते, तदा चकारवैयर्थ्यम् । न च 'यत्र पूर्वोत्तरे खण्डे' इतिवचनेन शिवचरितं बाहुल्येन यत्र तच्छैवं यथा, तथा भगवत्या दुर्गायाश्चरितं यत्र तद्भागवतम् इति बोधाय चकार इति वाच्यम् । "न तु देवीपुराणक"मित्यस्य निर्विषयत्वापत्तेः । न च देवीभागवतस्योपपुराणत्वव्युदासेन चारितार्थ्यमिति वाच्यम् । महापुराणगणनायामस्याप्रसक्त्या निषेधाऽप्रसक्तेरित्युक्तम् । ततश्च "द्वितीयकं भविष्यकमि"ति पूर्वोत्तरत्र दृष्ट्वा'त्पुराणकमि'त्यत्र कप्रत्ययः स्वार्थेऽस्वार्थकप्रत्ययसमासे नत्विति निषेधान्वयस्य क्लिष्टत्वाच्च तस्माद्देवीभागवतस्यैव निषेधः । वस्तुतस्तु देवीपुराणपदोल्लेखाद्देवीपुराणाद्यपद्ये भागवतपदसत्त्वात्प्राधान्येन दुर्गाचरितवत्त्वाच्च भागवतत्वप्रसक्तौ तस्यैव निषेधः । न चोपपुराणत्वं तस्येति वाच्यम् । अन्यपुराणदृष्ट्योपपुराणत्वेऽपि तत्र पुराणत्वेनैवोक्तत्वात् । अत एव गङ्गेशोपाध्यायानां महापुराणव्यवहारः । न च दुर्गाचरितपरत्वेन कालिकापुराणेऽतिप्रसङ्गः । तस्य देवीप्रतिपादकत्वेऽपि देवीपुराणपदेन व्यवहाराभावात् । भागवतपदाऽनुल्लेखात् । "यदिदं कालिकाख्यं च मूलं भागवतं स्मृतम्" इति कालिकापुराणे भागवतपदोल्लेख इति न भ्रमितव्यम् । गणनाबाधापत्त्या कालिकापुराणाद्भिन्नमेव भागवतमुपपुराणमित्युक्तमसङ्गतमाकू । किञ्च, 'भगवत्याश्चे'ति श्लोकेन तस्य महापुराणत्वे प्रसक्ते तस्य निषेधेनोपपुराणत्वनिश्चयः । न च "इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे । स्थिताय भवभीताय कारुण्यात्सम्प्रकाशितम्" इति श्रीमद्भागवतवाक्यात् "इदं भागवतं प्रोक्तं चतुःश्लोक्या स्वयम्भुवे । नारदाय स वै मह्यं कृष्णाय मुनये स्वयम् । शुकाय निष्णुरातार स तु रातोऽभिगन्यते" इति पद्मोत्तरखण्डवाक्याच्च, "भगवता प्रोक्तं भागवतम्" इति व्युत्पत्तेर्दर्शनाद् "भगवतोरिदं भागवतम्" इति व्युत्पत्तिः कथमिति वाच्यम् । "श्रीमद्भागवतस्याथ श्रीमद्भगवतस्तथा । स्वरूपमेकमेवाऽस्ति सच्चिदानन्दलक्षणम् । श्रीकृष्णासक्तभक्तानां तन्माधुर्यप्रकाशकम् । समुज्जृम्भति यद्वाक्यं विद्धि भागवतं च तद् । ज्ञानविज्ञानभक्त्यङ्गचतुष्टयपरं वचः । मायामर्दनदक्षं च विद्धि भागवतं च तद् । प्रमाणं तस्य को वेद ह्यनन्तस्याऽक्षरात्मनः । ब्रह्मणे हरिणा तद्दिक् चतुःश्लोक्या प्रदर्शिता । तदानन्त्याऽवगाहेन स्वेप्सितावहनक्षमाः । त एव सन्ति भो विप्रा ब्रह्मविष्णुशिवादयः" इति स्कन्दपुराणस्थश्रीमद्भागवतवचनैर्भगवतः स्वरूपं भागवतम् । भगवतो

१ भगिनतेत्ति पुस्तकम् ।

भक्ता भागवतास्तेषामिदम्, भगवती माया तस्या व्यावर्तकम्, भगवता प्रोक्तमिति व्युत्पत्तयो निरूपिताः। तथैव "भगवत्याश्च" इति श्लोकेन भगवतोरिदमिति व्युत्पत्तेः सत्त्वात्।

वस्तुतस्तु योगरूढमिदम्। "इदं भागवतं नाम पुराणं ब्रह्मसम्मितम्। उत्तमश्लोकचरितं चकार भगवानृषिः" "इदं भागवतं नाम पुराणं ब्रह्मसम्मितम्। अधीतवान्द्वापरादौ पितुर्द्वैपायनादहम्" इति श्रीमद्भागवतप्रथमद्वितीयस्कन्धवाक्यात्। "शुकोक्तं विष्णुराताय सदसि ब्रह्मवादिनाम्। श्रीमद्भागवतं नाम युनयां तमसः परम्" इति पाद्मोत्तरखण्ड उक्तत्वाच्च। अत्र भगवता व्यासेन "तत्राऽभवद्भगवान् व्यासपुत्रः" इति श्रीमद्भागवतप्रथमस्कन्धाद्भगवाञ्छुकस्तेन प्रोक्तमिति योगस्य भागवतं नाम श्रीमद्भागवतं नामेति रूढेश्च स्पष्टं प्रतीयमानत्वात्। एवञ्च शिवपुराणमतेनाऽपि देवीभागवतस्य महापुराणत्वं नैव सिद्धम्। एतेनात्र नियमद्वयस्य पूर्वोक्तस्य सत्त्वाद्विष्णुभागवते नियमद्वयाऽयोगस्य च भावादिदं शिवपुराणमतमेव मुख्यं अन्यपुराणमतं त्वेकदेशीति नियमद्वयप्रदर्शकव्यासवाक्येन स्पष्टमेव बोधितमिति सुधियो विभावयन्त्विति निरस्तम्।

यदपि "शैवमादिपुराणं च देवीभागवतं तथा" इतिपाद्मवचनसम्वादितया "नवरात्रे तु देवेशि दौर्गं भागवतं पठेत्। जपेत्सप्तशतीं चण्डीं नियमेन समाहितः" इति दुर्गातरङ्गिणीधृतयामलवचनेन। तथा "देवीभागवतं नित्यं पठेद्भक्त्या समाहितः। नवरात्रे विशेषेण श्रीदेवीप्रतये मुदा" इति महेशठक्कुरकृत "दुर्गाप्रदीप" धृतदेवीयामलवचनेन च सप्रमाणस्य देवीभागवतस्य सर्वथोपपुराणमध्य एव निवेशे "तत्र भागवतं पुण्यं पञ्चमं वेदसम्मितम्" इति प्रथमस्कन्धस्य महापुराणेषु पञ्चममिदं पुराणमित्यर्थकस्य देवीभागवतोक्तवचनस्य निरालम्बनत्वादप्रामाण्यापत्तेर्न्मते तस्य विषयलाभान्नाप्रामाण्यम्। तद्वचनप्रामाण्यादपि देवीभागवतमेव महापुराणमिति।

तच्चिन्त्यम्। देवीभागवते सूत उवाच–"शृण्वन्तु सम्प्रवक्ष्यामि पुराणानि मुनीश्वराः। यथाश्रुतानि तत्त्वेन व्यासात्सत्यवतीसुतात्। मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम्। अनापलिङ्गकूस्कान्याख्यं पुराणानि पृथक् पृथक्। चतुर्दशसहस्रं च मात्स्यमाद्यं प्रकीर्तितम्। तथाग्रहसहस्रं तु मार्कण्डेयं महाद्भुतम्। चतुर्दशसहस्राणि तथा पञ्चशतानि च। भविष्यं परिसङ्ख्यातं मुनिभिस्तत्त्वदर्शिभिः। अष्टादशसाहस्रं तु वैष्णवं भागवतं किल। तथा चायुतसङ्ख्यातं पुराणं ब्रह्मसञ्ज्ञकम्। द्वादशैव सहस्राणि ब्रह्माण्डं च शताधिकम्। तथाऽष्टादशसाहस्रं ब्रह्मवैवर्तमुच्यते। अयुतं वामनाख्यं च वायव्यं षट्शतानि च। त्रयोविंशतिसाहस्रं वैष्णवं परमाद्भुतम्। चतुर्विंशतिसाहस्रं वाराहं परमाद्भुतम्। षोडशैव सहस्राणि पुराणमग्निसाक्षिकम्। पञ्चविंशतिसाहस्रं नारदं परमं मतम्। पञ्चपञ्चाशत्साहस्रं पद्माख्यं विपुलं महत्। एकादशसहस्राणि लिङ्गाख्यं चातिविस्तरम्। एकोनविंशत्साहस्रं गारुडं हरिभाषितम्। सप्तैव दशसाहस्रं पुराणं कूर्मभाषितम्। एकाशीतिसहस्राणि स्कान्दाख्यं परमाद्भुतम्। पुराणसङ्ख्या सङ्ख्याता विस्तरेण मयाऽनघ। तथैवोपपुराणानि शृण्वन्तु मुनिसत्तमाः। सनत्कुमारं प्रथमं नारसिंहमतः परम्। नारदीयं शिवं चैव दुर्वाससमनुत्तमम्। कपिलं मानवं चैव तथा औशनसेरितम्। वारुणं कालिकाख्यं च साम्बं नन्दीकृतं शुभम्। सौरं पाराशरं प्रोक्तमादित्यं चातिविस्तरम्। माहेश्वरं भागवतं वशिष्ठं च सविस्तरम्। एतान्युपपुराणानि कथितानि महात्मभिः" इत्यष्टादशमहापुराणगणनायां चतुर्थत्वेन भागवतस्य

निरूपणात्। उपपुराणगणनायां सप्तदशत्वेनोक्तेर्देवीभागवतस्य पुराणोपपुराणबहिर्भावापत्तिभिया "पञ्चमं वेदसम्मतम्" इत्येतस्य वचनस्य श्रीमद्भागवतपरत्वेनैव सार्थक्यात्। मात्स्यश्रीमद्भागवतादौ ब्राह्माद्यष्टादशपुराणनिरूपणे पञ्चमत्वेन श्रीमद्भागवतस्य निरूपणात्। श्रीमद्भागवते "ब्राह्मं दशसहस्राणि" इत्यारभ्य ब्रह्माण्डं द्वादशैव त्वित्यन्ताष्टादशपुराणगणनोत्तरं "तत्राष्टादशसाहस्रं श्रीमद्भागवतमिष्यते" इत्युक्तम्। अत्र पञ्चमत्वेन निरूपितस्य "दशाष्टौ श्रीभागवतम्" इति वचनस्यैवाऽनुवादः। तस्य भागवतान्तरसन्देहे "इदं भगवता प्रोक्तं ब्रह्मणे नाभिपङ्कजे" इत्याद्युक्तम्। अत्र "इदम्" इति पदेन भागवतान्तरव्युदासो बोधितः। तत्र भागवतमिति श्लोक इदं पदाभावाद्देवीभागवतोक्तपुराणगणनायां देवीभागवतस्य पञ्चमत्वाभावाच्च श्रीमद्भागवतस्यैव सङ्ग्रह इति निश्चयः। ततश्च ब्रह्मवैवर्ते "ब्राह्मं पाद्मं वैष्णवं च शैवं लिङ्गं सगारुडम्। ततो भागवतं प्रोक्तम्" इत्यष्टादशपुराणगणनायां श्रीमद्भागवतस्य सप्तमत्वेन यथा निरूपणं, तथा देवीभागवते पुराणगणनायां चतुर्थत्वेन निरूपणम्। पञ्चमत्वेन निरूपणं तु श्रीमद्भागवतं मात्स्यादिप्रोक्तगणनयेति बोध्यम्। देवीभागवते तु पूर्वाऽपरविरोधान्नैवं वक्तुं शक्यमिति सुधियो विभावयन्तु। बहूनामनुग्रहस्य न्याय्यत्वात्पाद्मवाराहमात्स्यस्कान्दनारदादिशैवगौरीतन्त्रादिष्वष्टादशपुराणान्तर्गतत्वेन प्रसिद्धस्य श्रीमद्भागवतस्याऽन्यथात्वेन वक्तुमशक्यतया तत्रोक्तवचनस्य तत्परत्वेनैव व्याख्येयत्वादिति दिक्।

वस्तुतस्तु "शैवमादिपुराणं च देवीभागवतं तथा" इतिपाद्मवचनस्य, "नवरात्रे तु देवेशि दौर्गं भागवतम्" इति यामलवचनस्य 'देवीभागवतं नित्यमि'ति देवायामलवचनस्य चैतज्जातीयकानामन्यवचनानां च देवीपुराणपरत्वात्। 'नमस्कृत्य शिवां देवीं शर्वं भागवतं तथा। पुराणं सम्प्रवक्ष्यामि यथोक्तमृषिभिः पुरा' इतिदेवीपुराणाद्यपद्ये भागवतपदोपादानात्। न च तथा पदेन व्यवधानेन भागवतपदं न पुराणविशेषणम्, किन्तु शर्वस्येति पूर्वमुक्तत्वादिति वाच्यम्, शाब्दिकव्यवधानस्याकिञ्चित्करत्वात्। शर्वस्य भगवद्भक्तत्वेऽप्यत्र तथा प्रतिपादनस्य प्रयोजनाभावाद्यौक्तिकत्वाच्च। पूर्वोपादानस्याष्टादशपुराणान्तर्गतत्वखण्डने तात्पर्यम्।

साहस्रः सोऽसौ भागवताऽभिधः'' इत्युक्तेः । ''मरीचे शृणु वक्ष्यामि वेदव्यासेन यत्कृतम् । श्रीमद्भागवतं नाम पुराणं वेदसम्मितम् । तदष्टादशसाहस्रं कीर्तितं पापनाशनम् । सुरपादपरूपोऽयं स्कन्धैर्द्वादशभिर्युतः । भगवानेव विप्रेन्द्र विश्वरूपी समाहितः । तत्र तु प्रथमस्कन्धे सूतर्षीणां समागमे । व्यासस्य चरितं पुण्यं पाण्डवानां तथैव च'' इत्यादिना द्वादशस्कन्धानामनुक्रमणिकानिरूपकनारदीयोक्तेश्च । ''दशसप्त पुराणानि कृत्वा सत्यवतीसुतः । नाप्तवान्मनसस्तोषं भारतेनाऽपि भामिनि । चकार संहितामेकां श्रीमद्भागवतीं परामि''ति पाद्मवाक्याच्च व्यासकृतत्वेन स्पष्टमुक्तत्वात् । पाद्मे चोत्तरखण्डे ''इदं भगवता प्रोक्तं चतुःश्लोक्या स्वयम्भुवे । नारदाय स वै मह्यं कृष्णाय मुनये ह्यहम् । शुकाय ब्रह्मरातोऽप्य स तु राज्ञेभिमन्यवे'' तथा ''शुकोक्तं विष्णुराताय सदसि ब्रह्मवादिनाम् । श्रीमद्भागवतं नाम धुनयां तमसः परमि'ति । एतदेव लक्षणं वाराहेऽपि परीक्षितः शापकथनसङ्गे श्लोकान्तरेणास्ति । तथा 'ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः । परीक्षिच्छुकसम्वादः श्रीमद्भागवताभिधः । पुराणेषु तु सर्वेषु श्रीमद्भागवतं परम् । यत्र प्रतिपदं विष्णुर्गीयते बहुधर्षिभिः । इति सङ्कल्प्य मनसा श्रीमद्भागवताभिधम् । जन्माद्यस्य यतश्चेति धीमद्दान्तमुपावददि''त्यादिपूर्वापरपाद्मवचनबोधितानां भगवद्ब्रह्म–ब्रह्मनारद–नारदव्यास–व्यासशुक–शुकपरीक्षित्सम्वादत्वादिविशेषाणां श्रीमद्भागवत एवोपलम्भेन बहिर्मुखशङ्काया एवाऽनुदयात् । रामाश्रमास्तु दुर्जनमुखचपेटायां बहुविधयुक्तीराहु तास्ततो ज्ञेया विस्तरभियेति नानूद्यन्ते ।

श्रीमत्पुरुषोत्तमचरणास्तु श्रीभागवतस्वरूपविषयकशङ्कानिरासवादे केषाञ्चिदन्त्यजनजातसङ्घातानां-सकलप्रमाणमौलिभूतवेदफलभूते श्रीमद्भागवतेऽर्वाचीनत्वशङ्का, सा तु 'त्रयो वेदस्य कर्तारो मुनिभाण्डनिशाचराः'इति तथागतप्रणीतकारिकोक्तसरणीमनुसरन्तो माध्यमिकमतमध्यास्ते । यदि तथा स्यात्तदा महान्तः प्रामाणिका निबन्धकर्तारः स्वस्वग्रन्थेषु सम्मतिं न दद्युः । काऽस्ति सम्मतिरिति चेत्, अवधेहि–प्रथमं तावच्छङ्कराचार्यकृते चतुर्दशमतविवेके 'परमहंसधर्मो भागवते पुराणे कृष्णेनोद्धवायोपदिष्टः' इति पुराणनाम गृहीत्वोक्तम् । पाद्मसहस्रनामटीकायां वचनान्येव बहूनि तत्र लिखितानि । तथोपदेशसाहस्र्याष्टीकायां समाप्तौ श्रीभागवतं लिखितमस्ति । तथा सम्वत्सरप्रदीपनाम्नि प्राचीनगौडकृते स्मार्त्तनिबन्धे 'शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसङ्ग्रहैः । गृहे न तिष्ठते यस्य शास्त्रं भागवतं कलौ । कथं सः वैष्णवो ज्ञेयः शास्त्रं भागवतं कलौ । गृहे न तिष्ठते यस्य श्वपचादधिको हि सः' इत्यादिस्कन्दवचनैर्गृहे श्रीभागवताऽभावं दोषं प्रदर्श्य कलिदोषतः पावित्र्याय कतिचिच्छ्रीभागवतवचनानि लेख्यानीत्युक्त्वा भूयांसि श्रीभागवतवचांसि लिखितानि । तथा हेमाद्रिव्रतदानखण्डकालनिर्णयादिषु कलिधर्मनिर्णये च 'कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः । कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत्' इत्यादीन्युदाहृतानि ।

१ तथा ''ग्रन्थोष्टादशसाहस्रो द्वादशस्कन्धसम्मितः । परिक्षिच्छुकसम्वादः शृणु भागवतं च तत्'' इति पाठोभिर्कः खपुस्तके चतुर्थचरणमात्रव्यत्यासेन लब्धः ।

एवं प्रक्रियाकौमुदीकृता रामचन्द्राचार्यस्य पुत्रेण, नृसिंहाचार्येण च कालनिर्णयदीपिकाविवरणे भागवत इत्युक्त्वा 'आचार्यं मां विजानीयादि'ति देवपूजाप्रकरणे चाथो विष्णुः सितरक्तपीतासिततनुः कृष्णकृतान्नामभिर्हंसाद्यैरित्यत्र 'कृतं त्रेता द्वापरं च कलिरित्येषु केशवः । नानावर्णाभिधाकारो नानेव विधिनेज्यते'इत्यादीनि लिखितानि । तथा विद्यानिवासभट्टाचार्यकृतसच्चरितमीमांसाख्ये स्मार्तनिबन्धे 'देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन्' इति, 'त्वयोपभुक्तस्रगन्धे' त्यादीनि सम्मत्यर्थं लिखितानि । तथा मधुसूदनसरस्वतीभिरपि भक्तिरसायने श्रीमद्भागवतवचांस्येवोपनिबद्धानि । तथा जन्माद्यस्य यत इत्यादिश्लोकत्रयस्य मधुसूदनसरस्वतीकृता टीकास्ति । भगवद्गीतायाः सप्तमाऽध्यायव्याख्याने च जीवप्रतिबिम्बपक्षे 'नैवात्मनः प्रभुरि'तिसप्तमस्कन्धीयं वाक्यं च लिखितम् । अन्यान्यपि च तीरभुक्तदेश्यविष्णुपुरीनाम्नाऽपि भक्तिरत्नावल्यां नवधा–भक्तिनिरूपणाय श्रीमद्भागवतीयान्येव तत्र तत्र प्रदर्शितानि वाक्यानि ।

एवं काश्मीरदेशीयक्षेमेन्द्रनाम्ना क्षेमेन्द्रप्रकाशाख्ये स्वनिबन्धे 'त्वयोपभुक्त' त्यादीनि लिखितानि । तथा निर्णयसिन्धौ वामनजयन्तीनिर्णयेऽष्टमस्कन्धीयं "श्रोणायां श्रवणद्वादश्या" मित्यादि लिखितम् । भगवद्भास्करे श्राद्धमयूखे श्राद्धे मांसनिषेधकं "न दद्यादामिषं श्राद्धे" इति सप्तमस्कन्धीयमलेखि । भट्टोजिदीक्षितकृतायां चतुर्विंशतिमतव्याख्यायामाचारकाण्डे तर्पणोत्तरं "पूजानिर्णयेऽपि भागवतेऽप्येवमेवोक्तमि"त्युक्त्वा "मूर्त्याऽभिमतयाऽऽत्मन" इति "उद्वासाऽऽवाहने न स्त" इति चोक्तम् । नागोजीभट्टेनापि सप्तशतीव्याख्यायां "वैदिकस्तान्त्रिको मिश्रः" इत्येकादशस्थवचनमलेखि । अत एवं प्राचीनाऽर्वाचीननानादेशीयनिबन्धकर्तृभिरादृतमपि ये न पश्यन्ति ते चक्षुष्मन्तोऽप्यन्धा इति दिगित्याहुः । एवञ्च श्रीमद्भागवतस्याऽनेकपुराणवचनैर्व्यासकृतत्वेन निरूपणाच्छंकयाऽनुवादेन चाप्रामाण्यशङ्काऽनुत्थानाद्विविधनिबन्धकारैरादरणीयत्वेनोपेक्षितत्वगन्धाभावाच्च न कोऽपि शङ्कावकाश इति ।

न च श्रीधरैरत एव भागवतं नामाऽन्यदिति न शङ्कनीयमिति कथमुक्तमिति वाच्यम् । तत्र केषाञ्चिच्छ्रद्धातिशयेन पूजार्थं भागवतव्यवहारोपपुराणपरत्वात् । उपपुराणस्य देवीपुराणस्य तथा प्रसक्त्या तन्निषेधात् । "यत्राधिकृत्ये"त्यादिलक्षणोपन्यासेन तद्विरहबोधकोऽत एवेत्यस्योक्तत्वात् । युक्तं चैतत् । जैमिनिना वेदानां काठककौथुमादिसमाख्यावशेन पौरुषेयत्वमाशङ्क्य तन्निरासवत्स्थूणानिखननन्यायेन दृढीकर्तुं समाधानवदाचारमाधवे स्मृतीनामप्रामाण्यमाशङ्क्य तन्निरासवत्स्थूणानिखननन्यायेन दृढीकरणस्यावश्यकत्वादिति श्रीपुरुषोत्तमचरणैरेव समाहितत्वात् । एतेन देवीभागवतस्यैव निषेधप्रतियोगित्वेन बोधिता श्रीधरैरिति निरस्तम् । "यत्राधिकृत्ये"त्यादिलक्षणवाक्यस्य हेतुत्वेनोपन्यासात् । देवीभागवते तु "यत्राधिकृत्य" इत्यादिलक्षणसमन्वयस्य यथारूपमिति केश्चिद्दर्शितत्वात् ।

किञ्च, देवीभागवतस्य सकलैरपि उपपुराणानि निनिम्दन्ते । अष्टादशपुराणान्तर्गतत्वसाधिका युक्तयो निरस्ताः । अग्रे च निरसनीयाः । तत्रोपपुराणानि सलक्षणानि मात्स्य एव कानिचिद्

1 "श्रीमत्पुरुषोत्तमचरणा" इति पुस्तकान्तरेऽपि । 2 चतुर्थ्यन्तमिदम् ।

णितानि। तथा हि—"पाद्मे पुराणे यत्प्रोक्तं नरसिंहोपवर्णनम्। तच्चाष्टादशसाहस्रं नारसिंहमिहोच्यते। नन्दाया यत्र माहात्म्यं कार्तिकेयेन वर्ण्यते। नन्दापुराणं तत्प्रोक्तं सङ्ख्यानमिति कथ्यते। यत्र साम्बं पुरस्कृत्य भविष्येऽपि कथानकम्। प्रोच्यते तत्पुनर्लोके साम्बमेतन्मुनिव्रताः। एवमादित्यसञ्ज्ञं च तत्रैव परिपठ्यते। अष्टादशभ्यस्तु पृथक् पुराणं यत्र दृश्यते। विजानीध्वं मुनिश्रेष्ठास्तदेतेभ्यो विनिर्गतम्" इति। एवमेव स्कान्दप्रभासखण्डेऽपि। आदित्यपुराणे तु, "यदुक्तं भानुना पूर्वं पुत्राय मनवे द्विजाः। तदहं सम्प्रवक्ष्यामि शृणुध्वं गदतो मम। सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशाऽनुचरितं चैव पुराणं पञ्चलक्षणम्। यत्तत्रोपपुराणानां खिलत्वाल्लक्षणं स्मृतम्। ब्राह्मं पुराणं तत्राद्यं संहिताभ्यां विभूषितम्। श्लोकानां दशसाहस्रं नानापुण्यकथायुतम्। पाद्मं द्वितीयं कथितं तृतीयं वैष्णवं स्मृतम्। चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतम्। ततो भागवतं नाम भागद्वयविभूषितम्। चतुर्भिः पर्वभिः प्रोक्तं भविष्यं तदनन्तरम्। मार्कण्डेयमथ ज्ञेयं नारदीयमतः परम्। दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम्। भागद्वयेन लिङ्गं च ततो वाराहमुत्तमम्। संयुक्तमष्टभिः खण्डैः स्कान्दं चैव सविस्तरम्। ततस्तु वामनं कौर्मं भागद्वयविराजितम्। मात्स्यं च गारुडं प्रोक्तं ब्रह्माण्डं च ततः परम्। भागद्वयेन कथितं ब्रह्माण्डमभिसञ्ज्ञितम्। खिलान्युपपुराणानि यानि चोक्तानि सूरिभिः। इदं ब्रह्मपुराणस्य खिलं सौरमनुत्तमम्। संहिताद्वयसंयुक्तं पुण्यं शिवकथायुतम्। आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता" इति। अत्र "भागवतं भागद्वयविभूषितम्" इति पुराणक्रम उक्तम्। तत्र भागद्वयं किमिति विचिकित्सायां "संहिताद्वयसंयुक्तम्"इत्यनेन भागद्वयं व्याख्यातम्।

किञ्च, तत्रैव दानप्रस्तावे "ततो भागवतं प्रोक्तं भागद्वयविभूषितम्" इति लक्षयित्वा "ददाति सूर्यभक्ताय यस्तु भागवतं द्विजाः। सर्वपापविनिर्मुक्तः सर्वरोगविवर्जितः। जीवेद्वर्षशतं साग्रमन्ते वैवस्वतं पदम्" इत्युक्तम्। उपपुराणानां गणना कौर्मेऽपि। आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम्। तृतीयं नान्दमुद्दिष्टं कुमारेण तु भाषितम्। चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम्। दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम्। मानवं कापिलं चैव तथैवोशनसेरितम्। ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च। माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम्। पराशरोक्तमपरं मारीचं भार्गवाह्वयम्" इति। अत्र "पराशरोक्तमपरम्"इत्यस्याग्रे "तथा भागवताह्वयम्"इति कल्पितवान् कश्चित्। तदसङ्गतम्। मारीचभार्गवयोरग्रहणापत्तेः। अनेकेषु पुस्तकेषु "मारीचं भार्गवाह्वयम्"इत्येव पाठाच्च। एकस्य भागवतस्य ग्रहणेऽष्टादशसङ्ख्यायां न्यूनतापत्तेश्चेति प्रागप्युक्तम्। सूतसंहितायां तु क्रमस्तु कौर्मोक्त एव। किन्तु, नान्दस्थाने स्कान्दमुक्त्वाऽग्रे तल्लक्षणमुक्तम्। "लक्षं तु ग्रन्थसङ्ख्याभिः सर्वविज्ञानसागरम्। स्कान्दमथाऽभिवक्ष्यामि पुराणं श्रुतिसम्मतम्। षड्विधैः संहिताभेदैः पञ्चाशत्खण्डमण्डितम्। आद्या सनत्कुमारोक्ता द्वितीया सूतसंहिता। तृतीया शाङ्करी विप्रा चतुर्थी वैष्णवी मता। तत्परा संहिता ब्राह्मी सौराऽन्या संहिता मता" इति। एवं "ततः कालीपुराणाख्यं वाशिष्ठं मुनिपुङ्गवाः" ततो वासिष्ठलिङ्गाख्यमित्युक्तम्। कालिकापुराणे तु क्रमो

नामानि भिन्नान्येव । तथा हि—"शैवं यद्वायुना प्रोक्तं वैरञ्चं वैष्णवं तथा। यदिदं कालिकाख्यं च मूलं भागवतं स्मृतम्। सौरं च नारदीयं च मार्कण्डेयं च वह्निजम्। भविष्यं ब्रह्मवैवर्त्तं लैङ्गं चैव त्रयोदशम्। वामनं कौर्म्मं मात्स्यं च सप्तदशं च गारुडम्। स्कान्दमष्टादशं प्रोक्तं पुराणं च न संशयः"।

अत्र तन्मूलमिति पाठमङ्गीकृत्य तस्य कालिकापुराणस्य मूलं भागवतम्। तच्च भागवतं वैष्णवं तन्मूलं भवितुं नार्हति। देव्युपपुराणस्य देवीपुराणमूलत्व एव सामञ्जस्यात् शैवोपपुराणानां शैवेभ्यो वैष्णवोपपुराणानां वैष्णवेभ्य एवोत्पत्तिदर्शनादिति देवीभागवतमेव तन्मूलमित्युक्तम्। तदसङ्गतम्। एतेषामुपपुराणत्वनिश्चयादुपपुराणगणनायां प्रसक्तस्य भागवतस्य महापुराणत्वस्य वक्तुमशक्यत्वात्। यदि चात्रत्यभागवतपदस्य कालिकापुराणमूलबोधन एव तात्पर्यं न गणनायां, तदोपक्रमविरोधो, लैङ्गादीनां त्रयोदशत्वादिकथनविरोधश्च स्यात्। तस्माद्भागवतमुपपुराणं भिन्नमेव। तच्च 'ततो भागवतं प्रोक्तं भागद्वयविभूषितमि'त्यादिना लक्षितमादित्यपुराणात्मकं भागवतं ज्ञेयमित्युक्तम्। कालिकापुराणीयभागवतपदं देवीभागवतपरमिति कश्चिदित्यप्युक्तम्। ततश्च तन्मूलपदं कालिकाख्यविशेषणं भागवतविशेषणं वेति बोध्यम्। न च कालिकाख्यविशेषणे पुराणत्वप्रसक्तिरिति वाच्यम्। 'ततः कालीपुराणाख्यमि'ति सूतसंहितावचनेन कालिकाख्यमेव चेति कौर्मोक्त्या च, कालीपुराणं तु तत एकादशममुच्यत इति ब्राह्मवैवर्तोक्त्या चोपपुराणत्वनिश्चयात्। मूलपदस्य कालिकाख्योत्कर्षबाधकत्वात्। पुराणानां स्वोत्कर्षकथनस्य दृष्टचरत्वात्। (ब्रह्मवैवर्तेऽप्यष्टादशपुराणनिरूपणोत्तरं) 'आद्यं सनत्कुमारं च नारदीयं द्वितीयकम्। तृतीयं नारसिंहाख्यं शैवधर्मं चतुर्थकम्। दौर्वाससं पञ्चमं च कापिलेयमतः परम्। सप्तमं मानवं प्रोक्तं शौक्रमष्टममेव च। वारुणं नवमं प्राहुर्ब्रह्माण्डं दशमं स्मृतम्। कालीपुराणं तु तत एकादशममुच्यते। वासिष्ठं तु द्वादशमं माहेशं तु त्रयोदशम्। सांबं चतुर्दशं प्रोक्तं सौरं पञ्चदशं स्मृतम्। पाराशर्यं षोडशमं मारीचं तु ततः परम्। अष्टादशं भार्गवाख्यं सर्वधर्मप्रवर्त्तकम्" इति पाद्मोक्तविंशत्यध्याये श्रीमद्भागवतमाहात्म्ये "गणेशं नारसिंहं च नारदीयं तथैव च। शैवमादिपुराणं च देवीभागवतं तथा। वासिष्ठं लैङ्गं कालेयं पाराशर्यं तथैव च। जैमिन्याग्नेयमादित्यं वायव्यं शाम्भवं तथा। सनत्कुमारप्रोक्तं च भार्गवं नान्दिनं तथा" इति। गारुडे "पुराणं भागवतं दौर्गं नन्दिप्रोक्तं तथैव च। पाशुपत्यं रेणुकं च भैरवं च तथैव च" इति। पाद्मे शकुनपरीक्षायां तु "ब्राह्मं पाद्मं वैष्णवं च मार्तण्डं नारदेरितम्। तथैव गदितं राम पुराणं कापिलं तथा। वाराहं ब्रह्मवैवर्तं शकुनेषु प्रशस्यते। शैवं भागवतं दौर्गं भविष्योत्तरमेव च" इति। अत्रोदाहृतवचनेषु ब्राह्मपाद्मवैष्णवशैववायुस्कान्दनारदीयब्रह्माण्डब्रह्मवैवर्तादीनां पुराणगणनायां मात्स्यादिप्रसिद्धानामुपपुराणकोटौ प्रविष्टानां नाममात्रसाम्येऽप्युपपुराणत्वमेव। यतो मात्स्यादौ लक्षितेषु ब्राह्मस्य लक्षणं प्रसिद्धे ब्राह्मे नास्ति। तदुपपुराणम्। वैष्णवे सङ्ख्या न मिलत्यतस्तदुपपुराणम्। कालीमाहात्म्यादियुक्तं ब्रह्मवैवर्त्तमुपपुराणमेव। "स्कान्दं शतसहस्रं तु श्लोकानां शतमेव हि। भविष्यमेवरूपिणा लक्षार्धे सङ्ख्या स्मृतम्" इति भविष्यपुराणप्रथमाध्यायवाक्ये सङ्ख्याभेदेन स्कान्दभवि-

१ त॰दी॰नि॰परि.

रुपपुराणत्वमेव । अष्टादशपुराणेषु प्रसिद्धस्कान्दभविष्ययोस्तु "स्कान्दं नाम पुराणं तदेकाशीति निगद्यते । सहस्राणि शतं चैकम्" इति । "चतुर्विंशत्सहस्राणि तथा पञ्चशतानि च । भविष्यचरितप्रायं भविष्यम्" इति मात्स्ये सङ्ख्यानिरूपणात् ।

एवं बृहद्वामनबृहल्लिङ्गबृहत्कूर्मबृहद्विष्णुदेवीपुराणपुष्करशिवरहस्यविष्णुधर्मोत्तराद्यनेकपुराणानामुपपुराणत्वमेव, बाहुल्यभिया विरम्यते । अत्रविशेषविवेचनम् "एवमाज्ञापितास्तेन शिवेन मुनयः पुरा । अन्यान्युपपुराणानि चक्रुः सारतराणि च" इति पराशरवचनेन, "अन्यान्युपपुराणानि मुनिभिः कथितानि तु । अष्टादशपुराणानि श्रुत्वा सङ्क्षेपतो द्विजाः" इति कौर्मवचनेन, "अष्टादशपुराणानि श्रुत्वा सत्यवतीसुतात् । अन्यान्युपपुराणानि ऋषिभिः कथितानि तु" इतिसूतसंहितावचनेन चोपपुराणानामन्यऋषिकृतत्वमेव ज्ञेयम् । ननूपपुराणानि व्यासमुनिकृतान्येव सन्तीति चेत्, न; नारदीयशैववायव्यादिषु व्यासकृतत्वेऽपि कस्यचित्पुराणमतेनोपपुराणत्वदर्शनात्तादृशनियमस्याऽस्वीकारादिति प्रत्याख्यातम् ।

अत्र सौरकौर्मस्कान्दान्तर्गतसूतसंहिताब्रह्मवैवर्त्तेषु देवीभागवतं नोपलभ्यते । कालिकापुराणे तु भागवतपदमादिस्थपुराणपरमित्युक्तम्, तस्य भागवतत्वेनोल्लेखात् । पाद्मगारुडयोस्तु देवीभागवतं दौर्गं भागवतमित्युक्तम् । तस्य देवीपुराणपरत्वेन सम्भवात् । विजयत्रैलोक्याऽभ्युदयशुम्भनिशुम्भमथनाख्यपादत्रयात्मकदेवीपुराणे प्राधान्येन दुर्गाचरितस्य सत्त्वात् । अत एव गङ्गेशोपाध्यायानां तत्र देवीभागवतत्वेन व्यवहारः । तत्राऽऽद्ये पद्ये भागवतपदस्य पुराणसामान्याभिधायकत्वेन सत्त्वात् । तेन भगवत्या इदमिति व्युत्पत्तेर्दर्शितत्वात् । यदि देवीभागवतं तस्मिन्समये तैरुपलब्धं चेत्तदा भागवतोक्तलक्षणसम्भावितदेवीभागवतं हित्वा तल्लक्षणाऽनाक्रान्तं देवीपुराणं तदीयाऽऽद्यपद्ये भागवतपदमात्रेणाऽष्टादशपुराणान्तर्वर्तित्वेन न स्वीकुर्युः । अन्येऽपि निबन्धकारा देवीपुराणवचनानि प्रामाण्यपुरस्कारेणोदाजह्रुः । ततश्च पुराणोपपुराणगणनायां देवीपुराणस्य प्रवेशाय दौर्गं भागवतं देवीभागवतमित्यादौ देवीपुराणमेव मर्हातुमुचितमिति विद्वांसो विभावयन्तु । अस्माकं तु नाग्रहो देवीभागवतस्य निर्मूलतायाम् । दौर्गं भागवतं देवीभागवतमित्यनेन देवीभागवतस्य ग्रहणमस्तु प्रतिपदोक्तत्वात् । देवीपुराणसङ्ग्राहकवचनमन्यत्स्यात् । उपपुराणानामष्टादशसङ्ख्यातोऽप्याधिक्यात् । 'अन्यान्युपपुराणानि मुनिभिः कथितानि तु । अष्टादशपुराणानि श्रुत्वा सङ्क्षेपतो द्विजाः" इति कौर्मवचनाद् विविधैर्निबन्धकारैरेवं निर्णीतमिति । न च 'स्कन्धा द्वादश एवाऽत्र कृष्णेन मुनिना कृताः' इति देवीभागवतवचनेन देवीभागवतस्याऽपि व्यासकृतत्वप्रत्ययेन नोपपुराणत्वमिति वाच्यम् (पूर्वोक्ता–) नेकवचनैः श्रीमद्भागवतस्य व्यासकृतत्वेन निराबाधे देवीभागवतस्यापि व्यासकृतत्वस्वीकारे 'अष्टादशपुराणानां कर्ता सत्यवतीसुतः' इति वचनसिद्धाऽष्टादशपुराणकर्तृत्वे 'एवं पुराणसन्दोहश्चतुर्लक्ष उदाहृतः' इतिवचनसिद्धचतुर्लक्षताया बाधापत्तेः । न च देवीभागवतवचनस्य का गतिः, तस्य शिष्यद्वारा व्यासकृतत्वमित्यादिपर्यन्तपरतया एवाऽप्रस्यास्वीकार्यत्वात् । श्रीमद्भागवते तु नैवं वक्तुं शक्यम् । बहूनां वचनानामनुरोधादनेकवचनानामन्यथानयनाऽपेक्षयैकस्यैव देवीभागवतवचनस्य पुराणान्तरसहायहीनस्य तथा नेतुमुचितत्वादिति दामोदरशास्त्रिण आहुः ।

यत्तु, पुराणानां पञ्चलक्षणत्वेन श्रीमद्भागवतस्य दशलक्षणत्वेन नाऽष्टादशान्तर्वर्तित्वमिति, तन; "सर्गोऽस्याऽथ विसर्गश्च वृत्ती रक्षान्तराणि च । वंशो वंशानुचरितं संस्थाहेतुरपाश्रयः । दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः । केचित्पञ्चविधं प्राहुर्महदल्पव्यवस्थया" इति निरूप्याग्रे सर्गादीनां लक्षणानि निरूप्य "एवं लक्षणलक्ष्याणि पुराणानि पुरा विदुः । मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च" इति श्रीमद्भागवतद्वादशस्कन्धवाक्यात् । "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चेति पुराणं पञ्चलक्षणम् । एतदल्पपुराणानां लक्षणं च विदुर्बुधाः । महतां च पुराणानां लक्षणं कथयामि ते । दशाधिकं लक्षणं च महतां परिकीर्तितम्" इति ब्रह्मवैवर्तस्थश्रीकृष्णजन्मखण्डचरमाऽध्यायवाक्याच्च दशलक्षणस्यापि सिद्ध्या पञ्चलक्षणवत्त्वनियमाऽसिद्धेः । यत्र पञ्चलक्षणवत्त्वं तत्र महापुराणनामसाम्येऽपि न महापुराणत्वं, किन्तु पुराणत्वमेव । दशलक्षणलक्षितं, तु महापुराणम् । दशलक्षणानि तु श्रीमद्भागवते स्पष्टमेव प्रतीयन्ते । आदित्यपुराणे 'सर्गश्चे'ति 'पुराणं पञ्चलक्षणम्'इत्युक्त्वा 'ब्राह्मादीनां पुराणानामुक्तमेतत्तु लक्षणम् । एतच्चोपपुराणानां खिलत्वाल्लक्षणं स्मृतम्' इति पञ्चलक्षणत्वमेवोक्तम् । 'अष्टादशपुराणानि श्रुत्वा सत्यवतीसुतात् । अन्यान्युपपुराणानि मुनिभिः कीर्तितानि तु'इति सूतसंहितावाक्याच्चेत्यलं प्रसक्ताऽनुप्रसक्त्येति दिक् ।

यत्तु, "अष्टादशपुराणानि कृत्वा सत्यवतीसुतः । भारताख्यानमखिलं चक्रे तदुपबृंहणम्" इति स्कान्दमात्स्ययोः क्त्वाप्रत्ययेनाष्टादशपुराणोत्तरं भारतस्य निर्माणोक्तेस्तदुत्तरं श्रीमद्भागवतस्य करणादष्टादशपुराणबहिर्भावे सिद्धे देवीभागवतमेवाऽष्टादशान्तर्गतमित्याह ।

तदसत्, 'अष्टादशपुराणानां कर्ते'ति पाठान्तरस्य प्राचीनपुस्तकेषु दर्शनात् । 'पुराणानि कृत्वे'ति पाठेति तु पूर्वापरभावस्याऽविवक्षितत्वात् । अष्टादशपुराणानामभिप्रायस्य भारते वर्णने तात्पर्यात् । "अष्टादशपुराणानि अष्टौ व्याकरणानि च । ज्ञात्वा सत्यवतीसूनुश्चक्रे भारतसंहिताम्" इति भविष्यप्रथमाध्यायवाक्यात् । पूर्वापरभावविवक्षाग्रहे तु स्कान्दे काशीखण्डेऽष्टाविंशाध्याये श्रीगङ्गामाहात्म्ये 'तदा भागीरथो राजा क्व क्व भागीरथी तदा । यदा विष्णुस्तपस्तेपे चक्रपुष्करणीतटे' इति देव्या पृष्टे 'सन्देहोऽत्र न कर्तव्यो विशालाक्षि सदाऽमले । श्रुतौ स्मृतौ पुराणे च कालत्रयमुदीर्यते । भूतं भव्यं भवच्चाऽपि संशयं मा वृथा कृथाः' इति शिवेनोत्तरदानात्कालस्याऽविवक्षितत्वनिश्चयात् । अत एव पूर्वापरभावस्याऽपि न तथात्वसिद्धिः । 'एकत्र दृष्टः शास्त्रार्थोऽपरत्रापि तथा' इति न्यायात् । यदि च पूर्वापरभावस्य विवक्षितत्वमित्याग्रहस्तदा पुराणान्तरस्याऽपि बहिर्भावापत्तेः । तथा हि मार्कण्डेयपुराणारम्भे 'भगवन् भारताख्यानं व्यासेनोक्तं महात्मना । पूर्णमस्तमलैः(?)शब्दैर्नाना शास्त्रसमुच्चयैः'इत्याद्युक्त्वा 'तदिदं भारताख्यानं बह्वर्थं बहुविस्तरम् । तत्त्वतो ज्ञातुकामोऽहं भगवँस्त्वामुपागतः' इति चोक्त्वा । व्यासशिष्यजैमिनिना कृतेन प्रश्नचतुष्केन पुराणावतारे कथा दृश्यते । सा च भारतोत्तरभावित्वमन्तरेणाऽसङ्गता सती मार्कण्डेयपुराणस्याऽष्टादशभ्यो बहिर्भावनामापादयति । तथाऽग्निपुराणारम्भे "सूत त्वं पूजितोऽस्माभिः सारात्सारं वदस्व नः । येन विज्ञानमात्रेण सर्वज्ञत्वं प्रजायते" इति शौनकप्रश्ने 'सारात्सारो हि

भगवान् विष्णुरव्यय ईश्वरः' इत्याद्युक्त्वा पुराणमवतार्य तत्र द्वेधा सारं वदन्प्रसङ्गतो ग्रन्थान्ते 'गीतासारं प्रवक्ष्यामि सर्वगीतोत्तरोत्तरम् । कृष्णोऽयमर्जुनायाह'इति प्रतिज्ञाय 'दैवी ह्येषा गुणमयी' 'यस्यां जाग्रति भूतानि'इत्यादीनि कतिचित्पद्यान्येवोक्तवान् । अर्थमात्रोक्तौ तु पद्यानि न घटेत् । अतो भारतोत्तरभावित्वमाग्नेयस्याऽपि सिद्ध्यति । एवञ्चाष्टादशपुराणानीति वाक्यस्यैवाऽसङ्गतत्वापत्तिश्च । अतः पौर्वापर्यं न विवक्षितमष्टादशपुराणानि इति श्लोके इति बोध्यम् ।

यदि योगबलेनादावेवादिप्राक्कल्पीयं वाऽयादि इति नानेन भारतोत्तरत्वसिद्धिस्तेन वाक्यस्याऽपि नासङ्गतिरित्युच्यते, तर्हि प्रकृतेऽपि तौल्यात्परिहृत एव भवता विरोध इति न ते वक्तुमवकाशः । ननु व्यासस्याऽपरितोषाऽसङ्गतेरिति चेत्, न, प्राक्कल्पीयव्यासापरितोषानुवादस्यात्रापि शक्यवचनत्वादिति पुरुषोत्तमचरणाः । एवमनङ्गीकारे पाद्मस्कान्दनारदीयवाराहादीनां श्रीमद्भागवतमाहात्म्यप्रतिपादकानामष्टादशतो बहिर्भावापत्त्याऽष्टादशपुराणानीति श्लोकस्यैवाऽसम्भवापत्तेः ।

किञ्च, पाद्मोक्तस्य 'दशसप्त पुराणानि कृत्वा सत्यवतीसुतः । नाप्तवान्मनसस्तोषं भारतेनापि भामिनि । चकार संहितामेतां श्रीमद्भागवतीं पराम्'इति वचनस्य सप्तदशपुराणोत्तरं भारतनिर्माणबोधकस्य विरोधापत्त्या 'अष्टादशपुराणानी'त्यत्राऽष्टादशशब्दोऽष्टादशसमीपसप्तदशसङ्ख्यापरपौर्वापर्याऽभावविवक्षापरो वेति ज्ञेयम् । न चात्र पाद्मवचने सप्तदशपदं लक्षणया अष्टादशत्वबोधकमिति वाच्यम् । पाद्मे श्रीमद्भागवतमाहात्म्ये श्रीमद्भागवतकथाश्रवणाय समागतानां 'वेदान्तानि च वेदाश्च मन्त्रास्तन्त्राणि संहिताः । दशसप्तपुराणानि षट्शास्त्राणि समाययुः' इत्युक्तौ सप्तदशपुराणानां कथनस्य विरोधापत्तेः । अथवा सप्तकल्पवृत्तान्ताश्रये मात्स्ये तत्पुरुषवृत्तान्ताश्रये च स्कान्दे 'अष्टादशपुराणानि'इत्यस्य वचनस्य सत्त्वाच्छ्रीमद्भागवतस्य तु सारस्वतकल्पीयवृत्तान्ताश्रयस्य सत्त्वान्न शङ्कालेशः । एतेन अघोरकल्पवृत्तान्ताश्रयस्य भविष्यपुराणस्य 'अष्टादशपुराणानि अष्टौ व्याकरणानि च । ज्ञात्वा सत्यवतीसूनुश्चक्रे भारतसंहिताम्'इति वचनस्य न विरोधः । अत एव परस्परं पुराणेषु विरोधे कल्पभेदेनैव समाधानं सङ्गच्छते । अत एव विष्णुपुराणे मायामोहनात्मकपुरुषस्य विष्णुना स्वशरीरादुत्पादितस्य बौद्धावतारत्वमुक्तम् । 'मायामोहस्वरूपोऽसौ बुद्धो दनुसुतोऽभवत्' इति आग्नेय उक्तम् । श्रीमद्भागवते तु 'बुद्धो नाम्ना जिनसुतः कीटकेषु भविष्यती' इत्युक्तं न विरुद्ध्यते ।

यद्वा, भविष्यपुराणवचने व्याकरणसाहचर्याच्छतकोटिप्रविस्तरपुराणान्तर्गताष्टादशसजातीयवाक्यसमूहस्य ग्रहणम् । नानाविधशुद्धशब्दवत्नानाविधाऽर्थस्य भारत उपनिबन्धनीयतया तज्ज्ञानस्याऽऽवश्यकत्वात् । तेनाऽष्टादशपुराणानि न स्वकर्तृकानि । शतकोटिप्रविस्तरज्ञानेनैव चारितार्थ्यान्नैतज्ज्ञानस्याऽऽवश्यकतया तत्कथनाऽनुपयोगादसार्वज्ञताऽऽपादकत्वाच्च । ततश्चैतद्वचनैकवाक्यतया शतकोटिप्रविस्तरपुराणान्तर्गताऽष्टादशसजातीयवाक्यसमूहरूपाण्यष्टादशपुराणानि मनसि कृत्वेत्यर्थो वा । यथाग्रहेणाऽष्टादशपुराणानि व्यासकृतान्येवाऽस्मिन्पद्ये गृह्यन्ते तदुत्तरं भारतमिति क्रम इत्यप्युच्यते, तदस्तु; "ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो

व्याकरणं निरुक्तं छन्दो ज्योतिषमितिहासपुराणं न्यायो मीमांसा धर्मशास्त्राणि" इति मुण्डकश्रुतौ। "वाचा वै सम्राड् बन्धुः प्रज्ञायते । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणम्" इति "अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणम्" इत्यादिबृहदारण्यकश्रुतौ "ऋग्वेदो यजुर्वेदः सामवेदः आथर्वणश्चतुर्थ इतिहासपुराणं पञ्चमो वेदानां वेदः" इति छान्दोग्यश्रुतौ च "इतिहासपुराणं च पञ्चमो वेद उच्यते" इत्याद्यनेकवाक्येषु चेतिहासपुराणयोः क्रमविरोधो दुर्वारः स्यात् ।

न च शब्दक्रमादर्थक्रमस्य बलीयस्त्वात्पुराणोत्तरमितिहास इति वाच्यम् । निःश्वसितक्रमप्राबल्यतया तथावक्तुमशक्यत्वात् । शब्दक्रमे बाधे सति तथा कल्पनीयम् । अत्र त्वष्टादशपुराणानीत्यस्यार्थो निरूपितदिशासम्भवन्न तथा बोधयतीति । अत एवेतिहासपुराणानीति गृह्यमपि सङ्गतं भवति । अथवा "सर्वाण्येव पुराणानि कथितानि नरर्षभ । द्वादशैव सहस्राणि प्रोक्तानीह महर्षिभिः । पुनर्वृद्धिं गतानीह आख्यानैर्बहुभिर्नृप" इति भविष्यपुराणप्रथमाध्याये सर्वपुराणानां पूर्वं द्वादशसहस्रश्लोकसङ्ख्याकत्वेन निरूपणेन द्वादशसहस्रश्लोकसङ्ख्याकश्रीमद्भागवतस्य पूर्वं प्रादुर्भावितत्वेनाष्टादशपुराणान्तर्गतत्वे सम्पन्ने भारतोत्तरं नारदोपदेशेन "न तथा वासुदेवस्य महिमा ह्यनुवर्णितः" इति प्रथमस्कन्धवचनेन सामान्यतया श्रीमद्भागवतस्य पूर्वं निर्माणसिद्धेः पश्चा"द्भक्तियोगेन मनसि सम्यक् प्रणिहिते मले । अपश्यत्पुरुषं पूर्णं मायां च तदुपाश्रिताम् । तया सम्मोहितो जीवः" इत्यादिसिद्धान्तं समाधावुपलभ्याऽष्टादशसहस्रसङ्ख्याकश्रीमद्भागवतस्य करणात् ।

न च भविष्योक्तवचने "महर्षिभिः प्रोक्तानि"इति लिङ्गेनोपपुराणत्वबोधनादग्रे यथा स्कान्दमित्यादिना स्कान्दभविष्ययोरष्टादशपुराणोक्तस्कान्दभविष्यसङ्ख्यातो भिन्नसङ्ख्याविशिष्टबोधनाच दशसहस्रसङ्ख्याकत्वेन पूर्वं, पश्चाद्वृद्धिरिति कथनमुपपुराणपरमेवेति वाच्यम् । "सर्वाण्येव पुराणानि" इत्यत्र सर्वाणीति कथनादेवकाराच पुराणोपपुराणानां सर्वेषां सङ्ग्रहात् । "महर्षिर्भगवान् व्यासः" इत्यादौ महर्षित्वस्य व्यासेऽपि प्रसिद्धत्वेन व्यासकृताऽन्यऋषिकृतानि पूर्वं द्वादशसहस्राणि, पुनर्वृद्धिगतानीत्यर्थलाभात् । अत्रत्य स्कान्दभविष्ययोस्तूपपुराणत्वमेव सङ्ख्याभेदात् । दृष्टान्तस्तु विवक्षितैकदेशत्वेनाऽपि निर्वहति । एवञ्च प्रथमस्कन्धे "लोकस्याऽजानतो विद्वांश्चक्रे सात्वतसंहिताम्" इत्यनेन पूर्वं सात्वतसंहितानिर्माणमित्यवगम्यते । ततश्च "स संहितां भागवतीं कृत्वाऽनुक्रम्य चात्मजम् । शुकमध्यापयामास निवृत्तिनिरतं मुनिम्" इत्यनेन सात्वतसंहितां भागवतीं भगवत्प्रधानां भगवन्नाम्नीं वा कृत्वा । यद्वा पूर्वं पञ्चमत्वेन प्रसिद्धं भागवतं द्वादशश्लोकसहस्रात्मकं कृतमेव । तां भागवतीं भागवतस्येयं तद्व्याख्यात्मकाष्टादशसहस्रसङ्ख्याकां कृत्वा । यद्वा पूर्वं भागवतीं संहितां कृत्वा पश्चादनुक्रम्य प्रथममारभ्याऽनुक्रम्येत्यर्थान्न शङ्कोदयः । अनुक्रम्येत्यस्य शोधयित्वेत्यर्थं श्रीधरादय ऊचुः । श्रीव्यासचरणानां शोधनस्य न लौकिकसरणिः, किन्तु समाध्यनुभूतपदार्थानामनुक्रमस्यैव तत्त्वात् ।

वस्तुतस्तु, बहुभिः शिष्टैः "राजनि युधि कृञः" इति योगविभागात्क्वनिपि कृत्वेति निष्पा-

धाऽष्टादशपुराणानि यः कृतवान् स भारतं चक्रे इति व्याख्यातत्वान्निर्देशेन कर्तृकर्मणोरिति षष्ठ्या अनित्यत्वात्। अत एव 'धार्येरामोदमुत्तमम्' इति भट्टिरिति दीक्षिताः। यदि त्वामोदं गृहीत्वा धार्येरिति व्याख्यायते जयमङ्गलारीत्या तदेहाऽपि तद्रीत्यैव विमृश्येति अध्याहारेण तेषां पुराणानां कृत्वा कर्तेति व्याख्यानादयशाऽन्यम्योऽपि दृश्यन्त इति वा क्वनिप्, षष्ठी तु न तदर्हमिति न दोषावकाश इति दिक्।

दामोदरशास्त्रिणस्तु पूर्वोक्तशङ्कामुत्पाद्य देवीभागवते तृतीयस्कन्धे "वेदः शाखाः पुराणानि वेदान्तं भारतं तथा। कृत्वा सम्मोहसम्मूढोऽभवं राजन् मनस्यपि" इत्यादि भारतोत्तरं सम्मूढो व्यासो देवीमाहात्म्यं ज्ञातवानित्युक्त्या देवीभागवतस्याऽपि भारतोत्तरत्वं प्रतीयते। तच्च देवीभागवतस्याऽष्टादशान्तर्गतत्वपक्षेऽप्युक्तमात्स्यवाक्येन विरुध्यत इति त्वत्पक्षेऽप्येष दोषस्तुल्य एव। यदि चोक्तमात्स्यवचनं पुराणानि चतुर्लक्षाणि, भारतमेकलक्षं, रामायणं लक्षपादसङ्ख्यं, "एवं सपादाः पञ्चैते लक्षा मर्त्ये प्रतिष्ठिताः" इति सङ्ख्याप्रकरणस्थत्वात्सङ्ख्येयस्वरूपमात्रपरम्। न तु सङ्ख्याऽनपेक्षितक्रमपरमतो न भारतोत्तरत्वमस्य वचनस्य बाधकम्। स्वार्थपरान्यपरयोः स्वार्थपरस्यैव प्राबल्यादित्युच्यते। यदि भारतपूर्वंकृतिर्मनसा पश्चात्कृतिस्तु वागिन्द्रियेणेति भेदादविरोध इत्युच्यते तदाऽस्मत्पक्षेऽपि न दोष इत्याहुः।

अत्र केचित्, मन्मते तदानीं ग्रन्थो नैव जातः। किन्तु जन्मेजयं प्रत्येवं वक्ताऽस्मीति ज्ञानचक्षुषा ज्ञात्वा भारतात्पूर्वमेव देवीभागवतं कृतमित्यर्थस्य कल्पनात्। त्वन्मते तथा कल्पयितुं न शक्यते। चतुःश्लोकीभागवतोपदेशस्य जायमानत्वात्। उपदेशात्पूर्वं तज्ज्ञानाऽभावस्यावश्यं कल्पनीयत्वात्। यदि तत्रापि पूर्वं व्यासस्य ज्ञानमस्तीति स्वीक्रियते, तथा वक्ष्यमाणः सर्वोऽप्यर्थवादः स्यात्। ततश्च ग्रन्थसारस्य भङ्गप्रसङ्ग इत्यास्तां तावदित्याहुः।

तच्चिन्त्यम्। जन्मेजयं प्रति वक्तृत्वं न व्यासस्य, किन्तु वैशम्पायनस्य। यदि जन्मेजयवैशम्पायनसम्वादात्मकं भारतं करिष्यामीति ज्ञानचक्षुष्ट्वमुच्यते। तदा देवीभागवतं करिष्यामीति ज्ञानचक्षुष्ट्वेन देवीभागवतात्पूर्वं देवीमाहात्म्यज्ञानस्य सिद्धतया "सम्मोहसम्मूढः" इत्यस्य विरोधोऽनिर्वार्यः। क्त्वाप्रत्ययार्थस्य च यदि तन्निर्वाहाय पूर्वं मनसा कृतिः पश्चाद्वाचेतीति कल्प्यते, तत्तु दामोदरशास्त्रिभिरेवोक्तमिति न ततः कश्चिद्विशेष इति ज्ञेयम्। अष्टादशपुराणानीत्यस्य योऽर्थस्तमवोचाम, विस्तरतस्ततोऽवधेयम्।

किञ्च, पाद्मे श्रीमद्भागवतमाहात्म्ये श्रीमद्भागवतकथाश्रवणाय समागतानां परिगणनप्रसङ्गे 'वेदान्तानि च वेदाश्च मन्त्रास्तन्त्राणि संहिताः। दशसप्त पुराणानि षट् शास्त्राणि समाययुः" इत्युक्तौ सप्तदशत्वोक्तिः श्रोतव्यस्य श्रीभागवतस्याष्टादशत्वं बोधयति। तस्याऽष्टादशाऽनन्तर्गतत्वे देवीभागवतस्याऽष्टादशान्तर्गतत्वेऽष्टादशानां श्रोतृत्वसम्भवेन श्रोतुमागतानां पुराणानां सप्तदशत्वोक्तेर्निर्बीजत्वप्रसङ्गात्। एवं पाद्मे "दशसप्तपुराणानि कृत्वा सत्यवतीसुतः। नाप्तवान्मनसस्तोषं भारतेनाऽपि भामिनि। चकार संहितामेतां श्रीमद्भागवतीं पराम्" इति सप्तदश-

त्योक्तिरपि श्रीमद्भागवतस्यैव "एतां संहिताम्" इति निर्दिष्टस्याऽष्टादशत्वं गमयति । देवीभागवत-स्याष्टादशत्वेऽष्टादशपुराणानीत्यनुक्तेर्निर्बीजत्वप्रसङ्गादित्यपि दामोदरशास्त्रिण आहुः ।

अत्रापि, यत्तु, तेषामेव वचनेनैव विष्णुभागवतस्याऽष्टादशपुराणान्तर्गतत्वं न सिध्यति, किन्तु देवीभागवतस्यैवेति वार्धुषिकत्वं कुर्वाणो मूलमेव विनाशितवान् इति न्याय आपतितः । तथा हि—भारतं व्यासमुखाच्छ्रुत्वा, तत्र सन्दिहानः क्रोष्टुकिर्मार्कण्डेयं प्रत्यागत्य सन्देहं पृष्टवान् । तस्य मार्कण्डेयो मार्कण्डेयं पुराणमुक्तवान् । तदुक्तं मार्कण्डेयपुराणे "तदिदं भारताख्यानं बह्वर्थं श्रुतिविस्तरम् । तत्त्वतो ज्ञातुकामोऽहं भगवन्तमुपस्थितः" इति । तथाच पूर्वोक्तवचनमध्ये षोडशेत्येव वक्तव्ये सप्तदशेत्युक्तत्वाद्देवीभागवतमेव महापुराणम् । अन्यथा सप्तदशत्वपूर्तिर्न स्यात् । तस्मात्तद्वचनप्रामाण्याद्देवीभागवतमेव सिद्ध्यति । न तु विष्णुभागवतम् । भारतात्पूर्वं सप्तदशमदी-यभागवतसहितानि: (?) मार्कण्डेयमष्टादशमुभयमितसिद्धमेव । विष्णुभागवतस्य भारतोत्तरं जायमानत्वेन तन्मध्ये तस्यावस्थानसम्भवाभावादित्येवं जल्पनेनाऽपि दोषाभावादिति सुधियो विभावयन्त्विति ।

तदमनोरमम् । अष्टादशसु पुराणेषु देवीभागवतस्य प्रवेशायैवं षोडशत्वे प्रतिपादिते पूर्वोक्त-रीत्याऽऽग्नेयस्याऽपि भारतोत्तरोत्पादनेन पञ्चदशत्वे सम्पन्ने देवीभागवतप्रवेशेऽपि षोडशत्वैव सिद्ध्या सप्तदशत्वाऽसिद्धेः "अष्टादशपुराणानि कृत्वा" इति श्लोकस्यासङ्गतेश्च, तस्मात्पुराणानां प्रादुर्भावे पौर्वापर्यस्याऽविवक्षयैव निर्वाहोऽन्यथा न सिद्ध्यतीति पूर्वत्रोपपादनेन बोध्यम् । किञ्च, भवदभिमत्या भारतात्पूर्वं षोडशस्य सिद्ध्याऽपि भारतोत्तरत्र प्रसिद्धस्य मार्कण्डेयस्य श्रीमद्भागवत-श्रवणायागमने बाधकाऽभावात् । येन भवदभिमतं भवेत् । पद्मपुराणे षडध्यायश्रीमद्भागवत-माहात्म्ये तृतीयाध्याये सनत्कुमारादयो यदा श्रीमद्भागवतकथाप्रारम्भाय समुद्युक्तास्तदा "भृग्वा-दयः समाजग्मुः" इत्युक्तम् । तन्मध्ये दशसप्तपुराणान्याययुरित्युक्तम् । अग्रे च षष्ठाध्याये "आकृष्णनिर्गमात्त्रिंशद्वर्षाधिकगते कलौ । नवमीतो नभस्ये च कथारम्भं शुकोऽकरोत् । परी-क्षिच्छ्रवणान्ते च कलौ वर्षशतद्वये । शुद्धे शुचौ नवम्यां च धेनुजोऽकथयत्कथाम् । अस्मादपि कलौ याते त्रिंशद्वर्षशताधिकम् । ऊचुरूर्जे सिते पक्षे नवम्यां ब्रह्मणः सुताः" इत्युक्तम् । अत्र सनत्कुमारकथनसमये सकलपुराणानां पूर्वमेव सिद्धतया मार्कण्डेयपुराणस्याऽऽगमने कारणाभावे सिद्धे षोडशेति वक्तव्ये सप्तदशत्वोक्तिर्देवीभागवतं महापुराणं बोधयतीत्युक्तिः स्वसन्तोषाय, न विद्वत्कदम्बसन्तोषायेत्यलम् ।

किञ्च, "वैष्णवं नारदीयं च तथा भागवतं शुभम् । गारुडं च तथा पाद्मं वाराहं शुभदर्शने । सात्त्विकानि पुराणानि शुभानि" इत्युक्त्या । "स चाधर्मे मात्स्यकौर्मे समाहुर्वायुं चाहुः सात्त्विकं मध्यमं च । विष्णोः पुराणं भागवतं पुराणं सत्त्वोत्तमे गारुडं चाहुरार्याः" इति गारुडोक्त्या च भागवतस्य सात्त्विकत्वं पुराणानां विष्णुपरत्वमुक्तमतो विष्णुपरमेव भागवतमष्टादशान्तर्गतं, न तु देवीभागवतम् ।

किञ्च, स्कान्दे प्रभासखण्डे "चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः । अष्टादशपुरा-

णेषु शेषेषु भगवान् भवः" इत्युक्तम्। स्कान्दे सौरसंहितायां च "कथ्यते दशभिर्विप्राः पुराणैः परमेश्वरः। चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा प्रकीर्तितः। एकेनाग्निस्तथैकेन भगवाँश्चण्डभास्करः" इत्युक्तम्। ततोऽपि विष्णुपरमेव सात्त्विकोत्तमं भागवतमष्टादशान्तर्गतं, न तु देवीभागवतमिति निश्चीयते इत्यन्यामपि श्रीमद्भागवतस्याष्टादशपुराणान्तर्गतत्वसाधिकां युक्तिं दामोदरशास्त्रिण आहुः।

अत्रापि यदिदमनूद्यते तदसत्, त्वन्मते मात्स्योक्तसात्त्विकराजसतामससङ्कीर्णपुराणे मध्ये त्रयाणां व्यवस्था पूर्ववचनैस्त्वयोक्ता सङ्कीर्णपुराणानां तु नोक्ता केषु पुराणेष्वन्तर्भाव इतिवदन् करिष्यामि कुत्रचिदिति चेन्मन्मतेऽपि भगवत्या विष्णुशक्तित्वाभिधानेन मन्त्राधिष्ठात्रीं देवतां वन्दमानो दुर्गां दुर्बोधध्वान्तभानुगुरुं चेतिक्रमदीपिकोक्तप्रकारेण विष्णुमन्त्राणां दुर्गाया अधिष्ठातृत्वेन तयोरैक्याद्वा तत्प्रतिपादकभागवतस्य वैष्णवेष्वेवान्तर्भावात्। अत एव "हरिर्द्वाभ्यां रविर्द्वाभ्यां द्वाभ्यां चण्डीविनायकौ। द्वाभ्यां ब्रह्मा समाख्यातः शेषेषु भगवान् शिवः" इति वचनं सङ्गच्छत इत्याह।

तदसाधु। मात्स्ये कल्पाननुक्रम्य "सङ्कीर्णास्तामसाश्चैव राजसाः सात्त्विकास्तथा। रजस्तमोभयास्तद्वत्त्रयस्य उदाहृताः" इति कल्पानुकीर्तनोपान्त्याध्यायवाक्यात्। सङ्ख्यानुक्रमणिकाध्याये तु "सात्त्विकेषु तु कल्पेषु माहात्म्यमधिकं हरेः" इत्यादिना सात्त्विकराजसतामससङ्कीर्णकल्पानामेवोक्तत्वान्न पुराणेषु सङ्कीर्णत्वकथनम्। तामससात्त्विकराजसभेदेनैवैककल्पभेदेनाऽष्टादशसङ्ख्यासम्भवेन सङ्कीर्णस्य पुराणस्य नामापि नास्तीति विस्तरशोऽयमेव विचारः प्रत्यपादि ततोऽवधेयम्।

किञ्च, देवीभागवतस्य सात्त्विकाऽन्तर्भावोऽपि स्वतः पूर्वग्रन्थविरुद्धः। तत्र ग्रहणेन तस्य हरिमाहात्म्यप्रतिपादकत्वात्तदाश्रितकल्पस्य सात्त्विकत्वमेवायास्यति। 'सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः' इति वचनात्। ततश्च 'सङ्कीर्णेषु सरस्वत्याः' इति वचनेन सारस्वतकल्प इति नाम्ना च पारमहंस्यसामग्र्येव कर्तव्या स्यात्। अतो विष्णुभागवतं विहाय देवीभागवतमेवास्य वचनस्य विषयः। अस्ति चात्र सरस्वत्याविर्भावप्रतिपादकं वचनमिति त्वयैव पूर्वमुक्तम्। ततश्च देवीभागवतस्य सरस्वत्याविर्भावप्रतिपादनेन सङ्कीर्णसमर्थनेन विष्णोश्च सात्त्विकत्वसमर्थनेन भेदप्रतिपादनाद्देवीभागवतस्य सात्त्विकान्तर्भावप्रतिपादनस्य विरुद्धत्वात्। 'शैवेयं भगवती त्रिपुरा' इति सुन्दरीतापनीश्रुत्या शिवशक्त्यास्तामसत्वनिश्चयात्सात्त्विकत्वं दूरापास्तम्। मम तु सर्वरूपत्वाद्भगवत ऐक्येऽपि न क्षतिरिति दिक्।

यत्तु 'लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम्। प्रौष्ठपद्यां पौर्णमास्यां स याति परमां गतिम्' इति मात्स्ये श्रीमद्भागवतवचनयोरैक्ये सिंहवाहनेनाऽसाधारणधर्मेण देवीपुराणमेवाऽस्य श्लोकस्य विषय इति गङ्गेशोपाध्यायाः, देवीभागवतमिति भास्कररायादय आहुः। तदप्यसङ्गतम्। सिंहपदस्याऽनेकार्थत्वात्। 'सिंहस्तु राशिभेदे मृगाधिपे' इत्यनेकार्थकोशेऽभिधानात्। प्रौष्ठपद्यां च सिंहे सूर्यस्य सत्त्वात्। हेमि फलार्थे कालसम्बन्धस्याऽपि शक्यवचनत्वात्। मीनुसेनादिपदवत्सिंहासनस्य बोधाच्च। 'अष्टादशसहस्रैः कुर्याद्धेमसिंहासनं प्रिये' इति गौरीतन्त्रवाक्यात्। एतेन 'हेमसिंहयुतं चैतद्वैष्णवाय ददाति यः। कृष्णेन सह सायुज्यं स पुमांल्लभते ध्रुवम्' इति पाद्मे पद्मध्यायश्रीमद्भागवतमाहात्म्यश्लोको व्याख्यातः। स्कान्दे तु 'लिखित्वा तच्च यो दद्याद्धेम-

समन्वितम्'इत्युक्तम् । किञ्च श्रीमद्भागवते 'पुराणसङ्ख्यां सम्भूतिमस्य वाच्यप्रयोजने । दानं दानस्य माहात्म्यं पाठादेश्च निबोधत' इति प्रतिज्ञाय 'ब्राह्मं दशसहस्राणि' इत्यारभ्य 'चतुर्लक्ष उदाहृतः' इत्यन्तेनाऽष्टादशान्तर्गतत्वाय प्रासङ्गिकमुक्त्वा 'तत्राऽष्टादशसाहस्रं श्रीभागवतमिष्यते' इत्यनेन सङ्ख्यां,'इदं भगवता पूर्वम्' इत्यनेन सम्भूतिम्,'आदिमध्यावसाने' इत्यादिना वाच्यम्, 'कैवल्यैकप्रयोजनम्'इत्यनेन प्रयोजनं चोक्त्वा 'प्रौष्ठपद्याम्' इत्यनेन दानतन्माहात्म्ये उच्येते । तथैव मात्स्येऽपि सङ्ख्योक्तिपुरस्सरमिदमुच्यते । देवीपुराणं च 'लक्षमात्रेण'इति वाक्यान्न तावत्सङ्ख्याकम् । यद्यपि देवीभागवतं न तावत्सङ्ख्याकमुपलभ्यते तथापि यत्राऽधिकृत्येति लक्षणस्य श्रीमद्भागवतपरत्वेन निश्चयाद्दानप्रतिपादकस्यापि श्रीमद्भागवतपरत्वात् । पाद्मे श्रीमद्भागवतमाहात्म्ये श्रीमद्भागवतस्यैव 'हेमसिंहयुतं चैतत्' इति वचनेन श्रीकृष्णसायुज्यफलदानस्योक्तत्वात्तदेकवाक्यतयाऽस्याऽपि वचनस्य श्रीमद्भागवतपरत्वस्यैव निश्चयात् ।

किञ्च, मात्स्यवैष्णवादिदाने मत्स्यधेन्वादेर्वाहनस्यैव देयत्वेन वाहनमेव देयमिति नियमाभावः । ब्राह्मादिवाराहान्तानां वैशाखाद्याः पौर्णमास्यो दानकालाः । तत्र क्रमप्राप्तश्रीमद्भागवतस्य दानं 'प्रौष्ठपद्यां पौर्णमास्यां' इति गौरीतन्त्रवाक्यानुरोधाद्धेमसिंहासनसमन्वितस्योक्तम् । सर्वपुराणचक्रवर्तित्वात् । एतेन श्रीमद्भागवतस्य वैष्णवपुराणत्वेन तद्दान एकादश्यादिकालो गरुडादिवाहनयोगश्च युक्त इति परास्तम् । शैवलिङ्गादौ शिवरात्र्यादिकालस्य नन्द्यादिवाहनस्यादर्शनादिति न कुतर्कसञ्चारः । अपरे पुनर्भाद्रपौर्णमास्याः पारायणसमाप्तौ तद्दानं, तथासदाचारादित्याहुत इति दिक् ।

यत्तु, श्रीमद्भागवतसदृशप्रबन्धो व्यासकृतोऽन्यो नास्तीति कथं व्यासकृतं श्रीमद्भागवतमिति, तदसङ्गतम्; भगवत्प्रसादजनिताऽलौकिकसमाधावनुभूतस्य प्राकट्यात् । काठिन्येनाऽव्यासकृतत्वे पुष्करप्रादुर्भावादिदुर्गमतरग्रन्थस्य व्यासकृतत्वाभावापत्तेः ।

यदपि, 'अम्बरीषशुकप्रोक्तं नित्यं भागवतं शृणु । पठस्व स्वमुखेनापि यदीच्छसि भवक्षयम्' इति पाद्मेऽम्बरीषं प्रति गौतमवाक्ये प्रोक्तमित्यस्याऽध्यापितमित्यर्थात् 'व्यासेन कृत्वाऽस्य शुभं पुराणं शुकाय पुत्राय महात्मने यत् । वैराग्यशीलाय च पाठितं वै विज्ञाय चैवारणिसम्भवाय' इति देवीभागवतोक्तेः । 'शुकाय प्रोक्तम्'इति देवीभागवतपाठं विधत्त इति न श्रीमद्भागवतपाठमिति । तदपि न सम्यक् । स्कान्दे श्रीमद्भागवतमाहात्म्ये 'परीक्षिच्छुकसम्वादो योऽसौ व्यासेन वर्णितः । ग्रन्थोऽष्टादशसाहस्रः सोऽसौ भागवताऽभिधः' इति वाक्यस्य 'ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंयुतः । परीक्षिच्छुकसम्वादः श्रीमद्भागवताभिधः । पुराणेषु तु सर्वेषु श्रीमद्भागवतं परम् । यत्र प्रतिपदं विष्णुर्गीयते बहुधर्षिभिः । इति सङ्कल्प्य मनसा श्रीमद्भागवताभिधम् । जन्माद्यस्य यतश्चेति धीमद्यन्तमुपावदत् । इदं भगवता प्रोक्तं चतुःश्लोक्या स्वयम्भुवे । नारदाय स वै मह्यं कृष्णाय मुनये ह्यहम् । शुकाय स्वरातायं स तु राज्ञेऽभिमन्यवे । शुकोक्तं विष्णुरातय सदसि ब्रह्मवादिनाम् । श्रीमद्भागवतं नाम पुनर्धाम तमसः परम् । ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः । परीक्षिच्छुकसंवादः शृणु भागवतं च तत्' इत्याद्यनेकपूर्वापरपराम-

वचनानां देवीभागवते कथमपि समन्वयासम्भवेन 'अम्बरीषशुकप्रोक्तम्'इतिपाद्मवचनस्य देवी-भागवतविषयाभावतया श्रीमद्भागवतं शुकाय प्रोक्तं, शुकेन प्रोक्तमित्युभयविधप्रसिद्ध्या श्रीमद्भाग-वतपरत्वस्य निराबाधात् ।

तथा च श्रीमद्भागवतेऽपि 'शुकमध्यापयामास निवृत्तिनिरतं सुनिः । स तमध्यापयामास महा-राजं परीक्षितम्'इति ।

किञ्च, पाद्मे 'अम्बरीष नवं वस्त्रं फलमन्नं रसादिकम् । कृत्वा कृष्णोपभोग्यं हि सदा सेव्यं हि वैष्णवैः' इति वचनेनाम्बरीषाय वैष्णवधर्मबोधनप्रसिद्धया श्रीमद्भागवतपाठस्यापि वैष्णवधर्मत्वादुपदेशो युक्तः ।

वस्तुतस्तु, 'शुकाय प्रोक्तम्'इति चतुर्थीसमासो दुर्लभः । 'चतुर्थी तदर्थार्थबलिहितसुख-रक्षितैः'इति सूत्रेण तादर्थ्यचतुर्थीसमासो वक्तव्यः । स च प्रकृतिविकृतिभाव एव । बलिरक्षितग्र-हणाज्ज्ञापकात् । यूपाय दारु । नेह रन्धनाय स्थाली । 'अश्वघासादयस्तु षष्ठीसमासाः' इति सिद्धान्तकौमुद्यां स्पष्टम् । इदं च तत्सूत्र एव महाभाष्ये । तथा हि किञ्च चतुर्थ्यन्तस्य तदर्थ-मात्रेण समासो भवति । एवं भवितुमर्हति । चतुर्थीमात्रेण चेत् सर्वप्रसङ्गोऽविशेषात् । सर्वत्र सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण सह प्रसङ्गे भवति समासः प्राप्नोति । अने-नाऽपि प्राप्नोति । रन्धनाय स्थाली । अवहननायोलूखलमिति । किं कारणम्? अवि-शेषात् । न हि कश्चिद्विशेष उपादीयते । एवं जातीयकस्य चतुर्थ्यन्तस्य तादर्थ्येन सह समासो भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः । बलिरक्षिताभ्यां चानर्थकं वच-नम् । यो हि महाराजाय बलिः स महाराजार्थो भवति । तत्र तदर्थ इत्येव सिद्धम् । यदि पुनर्विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते इत्येतल्लक्षणं क्रियते । विकृते प्रकृत्येति चेद-श्वघासादीनामुपसङ्ख्यानं कर्त्तव्यम् । श्वसू सुरां हस्तिविधेति । अर्थेन नित्यसमासवचनमित्यादि विविच्य तर्हीदं बहु वक्तव्यम्, विकृत्येति वक्तव्यम् । अश्वघासादीनामुपसङ्ख्यानं कर्तव्यम् । अर्थेन नित्यसमासो वक्तव्यः । सर्वलिङ्गता च वक्तव्या । न वक्तव्यं यत्तावदुच्यते । विकृत्येति वक्तव्यम् । न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति । विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते इति । यदयं बलिरक्षितग्रहणं करोति । कथं कृत्वा ज्ञापकम् । यथाजातीयकानां समासे बलिरक्षित-ग्रहणेनाऽर्थः । तथा जातीयकानां समासः । यदि च विकृतिश्चतुर्थ्यन्ता प्रकृत्या समस्यते । न तदर्थमात्रेण । ततो बलिरक्षितग्रहणमर्थवद्भवति । यदप्युच्यतेऽश्वघासादीनामुपसङ्ख्यानं कर्तव्यम् । न कर्तव्यम् । अश्वघासादयः षष्ठीसमासा भविष्यन्तीत्युक्तम् ।

अत एव परपशाह्निके धर्माय नियमो धर्मनियम इत्यत्र च चतुर्थ्या तादर्थ्यं प्रतिपाद्यते । सम्बन्धसामान्ये तु षष्ठीं विधाय समासः कर्तव्यः । चतुर्थीसमासस्य प्रकृतिविकृतिभाव एव विधा-नादिति कैय्यटः । विधानादिति प्रतीकानुवादाय तादर्थ्यस्य षष्ठ्यर्थत्वबोधनाय त्वेवं प्रयोग इति मानमत्र चतुर्थीयोगविभागो न भाष्यारूढः सुप्सुपेति समास इत्यगतिकगतिरित्येवं व्याख्यातमिति विवरणग्रन्थश्च सङ्गच्छते । शब्देन्दुशेखरे तु रन्धनाय स्थालीत्यादावभिधानस्वाभाव्यात्तादर्थ्य-त्वेनैव तस्या भानं न सम्बन्धत्वेनेति षष्ठ्यभावान्न तत्र षष्ठीसमासः । चतुर्थीसमासवारणाय

प्रकृतिविकृतिभाव एवेत्युक्तम् । अश्वघासादावुपकारत्वेन बोधे षष्ठ्यन्तेन समासोऽपीति व्यवस्थेत्युक्तम् । एवं च प्रकृतिविकृतिभावाऽभावाच्छुकाय प्रोक्तमिति न समासः । शुकस्य प्रोक्तमित्यपि न उक्तयुक्त्या । तस्माच्छुकेन प्रोक्तमित्येव समास इति विद्वद्भिरवधेयम् । एतेन शुकाय प्रोक्तमिति चतुर्थीयोगविभागात्सुप्सुपेति वा समास इति परास्तम् ।

न च साधनं कृतेतिवार्तिकेनात्र समास इति वाच्यम् । तस्य हितरक्षितग्रहणेन चतुर्थीसमासेतरविषयत्वात् । छान्दसत्वकथनं त्वगतिकगतिरिति बोध्यम् ।

किञ्च, पाद्मे षडध्यायश्रीमद्भागवतमाहात्म्ये "सदा सेव्या सदा सेव्या श्रीमद्भागवती कथा । यस्याः श्रवणमात्रेण हरिश्चित्तं समाश्रयेत् । ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मतः । परीक्षिच्छुकसम्वादः शृणु भागवतं च तत् । तावत्संसारचक्रेऽस्मिन्भ्रमते शौनकः(?)पुमान् । यावत्कर्णगता नास्ति शुकशास्त्रकथा क्षणम् । श्लोकार्द्धं श्लोकपादं वा नित्यं भागवतोद्भवम् । पठस्व स्वमुखेनैव यदीच्छसि परां गतिम्"इत्यादिवचनैः । स्कान्दे श्रीमद्भागवतमाहात्म्ये 'श्रीमद्भागवतं शास्त्रं यत्र भागवतैर्यदा । कीर्त्यते भूपते चापि श्रीकृष्णस्तत्र निश्चितः । यत्र भागवतं शास्त्रं श्लोकं श्लोकार्धमेव वा । तत्रापि भगवान्कृष्णो वल्लवीभिर्विराजते । भारते मानुषं जन्म प्राप्य भागवतं न यैः । मुक्तं पापं पराधीनैरात्मघातस्तु तैः कृतः । श्रीमद्भागवतं शास्त्रं नित्यं यैः परिसेवितम् । पितुर्मातुश्च भार्याया कुलपङ्क्तिस्तु तारिता । विद्याप्रकाशो विप्राणां राज्ञां शत्रुजयो विशाम् । धनं स्वास्थ्यं च शूद्राणां श्रीमद्भागवताद्भवेत् । योषितामपरेषां च सर्ववाञ्छितपूरणम् । यतो भागवतात्तं वै को न सेवेत भाग्यवान्"इत्यादिवचनैश्चान्यपुराणवचनैश्च श्रीमद्भागवतस्य पठने सिद्धेऽम्बरीषशुकप्रोक्तमिति श्लोके श्रीमद्भागवतस्यैव पाठं विदधाति । अत एव "अथवा सर्वमेतद्धि श्रीभागवतमादरात् । पठनीयं प्रयत्नेन सर्वहेतुविवर्जितम्'इति । "पठेच्च नियमं कृत्वा श्रीभागवतमादरात्"इति च श्रीमदाचार्यचरणैरुक्तम् 'विद्याप्रकाश'इत्यादिषु फलबोधनं द्विजातीनां त्रैवर्णिकानामेव पाठेन, स्त्रीशूद्राणां तु श्रवणेनेति बोध्यम् । यदौपनिषदं ज्ञानं श्रीभागवतमेव वा । वर्णानामेव तद्धि स्यात्स्त्रीशूद्राणां ततोऽन्यथा"इति तृतीयस्कन्धनिबन्धे श्रीमदाचार्यचरणोक्तेः । शङ्कराचार्यैर्विष्णुसहस्रनामभाष्ये शूद्रस्य सहस्रनाम्नः श्रवणेनैव फलोक्तेः । स्मृतिकौमुद्यां स्कान्दवचनैः"इति शूद्रस्य शुश्रूषा पुराण" इत्यादिभिश्च तथैव निर्णयोक्तेश्चेत्यलं प्रासङ्गिकविचारेण । तस्मात्सकलपुराणसम्मत्या श्रीमद्भागवतमेवाष्टादशपुराणान्तर्गतं महापुराणमिति सिद्धम् ।

इति श्रीवल्लभाचार्यचरणाब्जप्रसादतः ।
श्रीविठ्ठलेशपादाब्जयुगलमुपाश्रितः ॥ १ ॥
पुरुषोत्तमपादानां ग्रन्थानां युक्तिवृन्दतः ।
पुराणानां प्रचारेण विचारेण सुमेधसाम् ॥ २ ॥
श्रीमद्भागवते शङ्कासमुन्मूलनहेतवे ।
मत्स्फुरद्दलिपद्मामरण्याभिधः सुधीः ॥ ३ ॥

श्रीविट्ठलेशचरणाम्बुजराजहंसो
गोपालनन्दनपदाम्बुजचञ्चरीकः।
श्रीकृष्णचन्द्रचरणाम्बुजसेवनात्मा
विद्वत्कदम्बवचनानुगतार्थसार्थः ॥ ४ ॥
विज्ञापयामि विबुधान्प्रणिपत्य पूर्वं
ग्रन्थं निधाय निकटे विजयाभिधानम्।
हेलोपहासविधयापि यदा कदापि
कश्चित्क्षणं करणयैष कृतार्थनीयः ॥ ५ ॥
यद्वन्न सदसद्वापि प्रमादाद्यन्निरूपितम्।
साधवः कृपया पूर्णा भूषयन्तु शिशोर्वचः ॥ ६ ॥
न द्वेषान्न च मत्सरान्न च हठान्नो शास्त्रगर्वान्न वै
लोभान्नाप्यनुवृत्तितो न च चमत्कारादियं मे कृतिः।
किन्तु श्रीशुकशास्त्रसिन्धुरसिकस्वान्तःप्रमोदाय स—
चिन्तापङ्कसुमार्जनाय विदुषां प्रीत्यै च भूयाच्चिरम् ॥ ७ ॥
श्रीमद्भागवतोत्कर्षो यथार्थोऽयं निरूपितः।
तेन प्रसीदतु श्रीमत्कृष्णः समार्थरक्षकः ॥ ८ ॥

इति श्रीमत्सहजनिजकटाक्षपातप्रतिहतपाखण्डवादकदम्बश्रीमदाचार्यचरणतनूज-
श्रीप्रभुचरणात्मजश्रीयदुनाथकुलावतंसश्रीमद्गिरिधरचरणकोकनद-
परागरागसनाथनेतोपनामकरामकृष्णभट्टप्रणीतः
श्रीमद्भागवतविजयवादः सम्पूर्णतामाप।

वेदविष्णुपदाङ्केन्दु १९२४ युग्वर्षे फाल्गुने सिते।
कृष्णवर्मतिथौ रामकृष्णेनालेख्यशोधि च ॥ १ ॥



श्रीगोपालो जयति

श्रीरामचन्द्राश्रमविरचिता

# दुर्जनमुखचपेटिका

---

वल्लवीवल्लभं नत्वा ब्रुवे विद्वद्विनिश्चयम् ।

भागवताभिधे ग्रन्थे आर्षानार्षत्वसंशये ॥ १ ॥

भागवतमनार्षमिति वदन्तः प्रष्टव्याः कथमनार्षत्वमिति, ग्रन्थे व्यासनामदर्शनात् । यो हि ग्रन्थं कृत्वाऽन्यस्य नाम लिखति सो हि प्रीत्या, यथा विद्यारण्यैर्वेदभाष्ये माधवनाम लिखितम् । एवं धनादिलोभाद्वा । यथा बोपदेवेन हेमाद्रेर्नाम्ना । अत्र च व्यासनामलेखने ग्रन्थकर्तुः किं कारणम् । नापि धनादिलोभो नापि प्रीत्यतिशयः । किञ्च, यस्य स्वतः शक्तिर्नास्ति स धनादि दत्वाऽन्येन ग्रन्थं कारयति, नैतद्व्यासस्य युज्यते । किञ्च, ग्रन्थकरणं यशोर्थं लोभार्थं वा पण्डितस्य, व्यासनामलिखने तूभयं न सम्भवति । यदि ग्रन्थकर्तुर्नाम्नि सत्यपि सन्देहः स्यात्तर्हि महाभाष्ये पतञ्जलिकृतत्वे तर्कादौ गौतमकृतत्वे शारीरकादौ शङ्कराचार्यकृतौ च सन्देहो दुर्वारः ।

किञ्च, माधवेन विजयध्वजेन भागवते टीका कृता । तत्र तावदष्टौ टीका अवलोक्येत्युक्तम् । हनुमट्टीका शङ्कराचार्यटीका चेत्याद्युक्तम् । तत्कथं सङ्गच्छताम् । बोपदेवस्य पञ्चशती सम्वत्सराणां व्यतीता, शङ्कराचार्याणां सप्तदशशती व्यतिक्रान्ता । आचार्यादिटीका कुतो न प्रवर्तत इति चेत् । कठिनत्वादधिकार्थभावात्क्वचि छुरिकावत् । किञ्च, आचार्यैर्गोविन्दाष्टके मृत्स्नामत्सीहेति यशोदेत्याद्युक्तम्, मृद्भक्षणस्य भागवतादन्यत्रादर्शनात् ।

किञ्च, "अष्टादशपुराणानां कर्ता सत्यवतीसुतः ।" इति वचनादपि व्यासकृतत्वं निश्चीयते । नच ब्रह्मवैवर्तेऽष्टादशपुराणमेव गणितमिति वाच्यम् । तत्रोपपुराणमध्ये देवीपुराणस्य पृथग्गणितत्वात् ।

किञ्च, मत्स्यपुराणे पुराणदानप्रस्तावे भागवतस्य लक्षणमुक्तम् । ग्रन्थोऽष्टादशसाहस्रः इत्यादिना । अम्बरीषशुकप्रोक्तमिति पद्मपुराणे । नचैतद्देवीपुराणं सम्भवति । अप्पयदीक्षितैः शिवतत्त्वविवेकादौ सम्मतित्वेन भागवतं स्वीकृतम् । मधुसूदनसरस्वतीभिर्भक्तिरसायने भागवतं व्याख्यातम् । विद्यमानैः पूर्णेन्द्रमहेन्द्रादिसरस्वतीभिर्भागवतं स्तूयते । भट्टोजिदीक्षितैर्भागवतं स्वीकृतम् । तदपेक्षया कोऽयमधिको पण्डितो यो निन्देद्भागवतम् ।

वाममार्गगाः भागवतं दूषयन्ति । "विरान्ध शिवदीक्षायां यत्र दैवं सुरासव"मित्यादिना वाममार्गस्य भागवते निन्दितत्वात् ।

किञ्च, वाममार्गगा विष्णुमपि निन्दन्ति, "विष्णोर्नाम न गृह्णीयात् स्वप्नेपुऽस्वंदष्टम्" इत्यादिना । वेदमपि निन्दन्ति—

"त्रयो वेदस्य कर्तारो मुनिभाण्डनिशाचरा" इति वदन्तः मांसाशिनो भागवतं निन्दन्ति—

"न दद्यादामिषं श्राद्धे न चाद्याद्धर्मवित्"इत्यादिना मांसभक्षणस्य भागवते निषिद्धत्वात्।

द्वैतवादिनोऽपि भागवतं द्विषन्ति—"भयं द्वितीयाभिनिवेशितः स्यादि"त्यादिना द्वैतदर्शनस्य भागवते निन्दितत्वात्।

किञ्च, ते वेदमपि द्विषन्ति—वेदे ईश्वरो निर्गुण उक्तस्ते सगुणं वदन्ति। वेदे जीवेश्वरयोरैक्यमुक्तम्, ते तु पारमार्थिकं भेदं वदन्ति। वेदे आकाशो मनश्च जायत इत्युक्तम्। ते तु अनाद्यनन्तं वदन्ति। वेदे तु मायया जगदुत्पन्नमित्युक्तम्, ते तु परमाणून्वदन्ति। इत्यादिवेदविरुद्धार्थप्रतिपादकत्वात्, पाखण्डविशेषा एव ते, पालनाच्च त्रयीधर्मो या शब्देनेह कथ्यते, तं खण्डयन्ति, ते यस्मात्पाखण्डास्तेन ते स्मृता इति पाखण्डलक्षणस्य तेषु सत्त्वात्।

किञ्च, माधवसरस्वतीसमये केनचित्पण्डितेन भागवतमप्रमाणमित्युक्तम्। तदा स्वामिभिरुक्तम्। अयं जारजो भविष्यतीति विचारणीम्। तदा पण्डितैर्विचारिते स गोलक इति निश्चितम्।

किञ्च, बोपदेवकृतग्रन्थगणनायां त्रयो ग्रन्था उक्ताः, परमहंसप्रियाख्यटीका, फलाख्यग्रन्थः, हरिलीलाख्यश्च। यदि भागवतमपि तत्कृतं भवेत्तर्हि चत्वार इति वक्तव्ये त्रय इति कथमुक्तम्? वैषम्ये न बीजं पश्यामः। भागवते व्यासनाम लिखितं त्रिषु स्वनामेति।

यत्तु, निबन्धेषु भागवतसम्मतिर्नास्तीत्युक्तम्। अत्रोच्यते। निबन्धेषु श्राद्धोपवासादिसकामधर्मनिरूपणं क्रियते। भागवते तु श्राद्धादिनिरूपणं नास्ति।

यत्तु, व्यासकृतपुराणान्तरस्थश्लोकानुपूर्वीसादृश्यं भागवतश्लोकेषु न दृश्यते इत्युक्तम्। अत्राप्युच्यते। धर्मशास्त्रेतिहासाद्यनन्तरं व्युत्पन्नदशायां परमप्रेम्णा भागवतं कृतम्। अतः, तेषु पुराणान्तरवैलक्षण्यमनुमीयते। यथा शङ्कराचार्यकृतषोडशभाष्येष्वन्यभाष्यसादृश्यं शारीरिकभाष्ये न दृश्यते, तत्किं शङ्कराचार्यकृतं न भवति? तथा भागवतमपि।

किञ्च, कर्मस्वनादराच्छीलभावान्न तत्र सौष्ठवम्।

अथ भागवतं नामान्यदिति न शङ्कनीयमिति श्रीधरस्वामिवचनाच्छङ्का प्रागस्तीति गम्यते। अन्यथा न शङ्कनीयमिति किमर्थमिति चेत्, उच्यते, मीमांसकवैशेषिकादिभिर्वेदप्रामाण्यं साधितमिति प्राग्वेदाप्रामाण्यशङ्का स्थिता इति न स्वीक्रियते यथा, तथात्रापि स्वीकार्यम्। अथास्तिकानां वेदाप्रामाण्यशङ्काभावेऽपि नास्तिकानां सा स्थितेति समः समाधिः। यथा च मन्वादिधर्मशास्त्रेऽपि चौर्यहिंसादिनिषेधात्, प्राक् तदनुष्ठानं स्थितमिति न स्वीक्रियते। तथा प्रकृतेऽपि।

अथ विधिना चौर्याद्यनुष्ठानाभावेऽपि रागप्राप्तं तदासीदिति, तर्ह्यत्रापि द्वेषतस्तदाशङ्कनं स्थितमिति समं समाधानम्। वस्तुतः श्रीधरस्वामिनां नायमाशयः प्राक् शङ्का स्थितेति। किन्त्वन्य एव। तथाहि। सर्गादीनि दशलक्षणानि यत्रोक्तानि तद्भागवतमिति स्थिते द्वितीयस्कन्धस्य भागवतत्वमस्तु। दशानामपि लक्षणानां सङ्क्षेपेणोक्तत्वात्तृतीयादीनामप्यस्तु सर्गाद्येकैकस्योक्तत्वात्। प्रथमस्कन्धस्य तु न कथमपि भागवतत्वम्। एकस्यापि लक्षणस्यानुक्तत्वादिति प्रथमस्कन्धो न भागवतमिति शङ्कते कश्चित्, तत्, स्वामिभिर्निराक्रियते। अन्यत्प्रथमातिरिक्तं

भागवतमिति, कुत इत्याकाङ्क्षायामत एव उक्त लक्षणवशादेव। अष्टादशसहस्रत्वद्वादशस्कन्धसम्मितत्वगायत्रीसमारम्भादीनां प्रथमेन विनाऽसम्भवात्। उपोद्घातत्वेनाधिकारिनिरूपणेन प्रथमस्यापि भागवतत्वमस्ति। यथा "अशोच्या नन्वशोचस्त्वमि"त्यारभ्य भगवद्गीतात्वेऽपि, ततः प्राक्तनस्य ग्रन्थस्योपोद्घातत्वेन गीतात्वम्। तथा प्रथमस्यापि। "अव्यक्तं व्यक्ति"मापन्नमिति। "सद्देश्वरात् सतोऽवमन्यन्ते हरिप्रियान्बला" इति वचनाद्भगवतोऽपि निन्दकानां भागवतनिन्दने कोऽतिभारः। "न वेद यो यस्य गुणप्रकर्षं स तं सदा निन्दति नात्र चित्रम्। वने किराता करिकुम्भजातां मुक्तां परित्यज्य बिभर्ति गुञ्जामि"ति न्यायेन भगवतो भागवतस्य च निन्दकस्योक्तेषु चतुर्ष्वन्तर्भावो बोध्यः। इदानीन्तनाः कवयः स्वल्पमपि भाषाकवित्वं कृत्वा तत्र स्वनाम निक्षपन्ति। अयं तु अष्टादशसाहस्रीं कृत्वा लोभादिना विनापि व्यासनाम निक्षिपन्न भ्रान्तः स्यात्। "नहि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्तत" इति न्यायात्।

किञ्च, निबन्धकारैरष्टादशपुराणानां च मध्ये यस्यैव नाम न लिखितं तस्यैवाप्रमाण्यं स्यात्। शङ्कराचार्यैर्वेदस्य बहूनां शाखानां मध्ये यस्या नाम न लिखितं तस्या अप्रमाण्यं स्यात्। भगवत्या इदमिति व्युत्पत्तिबलेन देवीपुराणं भागवतं यदुच्यते। तर्हि गच्छतीति गौः इति व्युत्पत्तिबलेन खरोष्ट्रादेरपि गोत्वं स्यात्। मनोरपत्यं मनुष्य इति व्युत्पत्त्याऽश्वसूकरादेरपि मनुष्यत्वं स्यात्।

अथ तत्र सास्नादिमत्त्वादिना लक्षणेन व्यवस्था यदि, तर्ह्यत्रापि, अष्टादशसहस्रादिलक्षणेन व्यवस्था बोद्धव्या।

ननु "यावत्कीर्तिर्मनुष्यस्य पुण्यलोकेषु गीयते। तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥" इति वचनात्स्वर्गप्राप्त्यर्थं व्यासनामनिक्षेपेण भागवतनिर्माणं केनचित्कृतमिति किं न स्यात्? मैवम्; कीर्तिप्रचारोहितादुक्तश्लोकात्स्वर्गप्राप्तिहेतुत्वेनावगम्यते। कीर्तिश्च व्यासनामनिक्षेपाद्व्यासस्यैव। नतु ग्रन्थकारस्यानार्षत्वमभ्युपेत्य। ब्रूतेऽयं ग्रन्थो वेदेन विरुद्धार्थस्य प्रतिपादकोऽविरुद्धार्थस्य वा। आद्येऽस्यार्षत्वेऽप्यप्रामाण्यमेव स्यात्। बृहस्पतिप्रणीतचार्वाकशास्त्रवत्। अन्त्येऽनार्षत्वेऽपि वेदमूलकत्वेन स्मृतिवदस्य प्रामाण्यमेव। स्मृतीनां प्रामाण्यं हि वेदमूलकत्वेन, न तु ऋषिप्रणीतत्वेन।

अन्यथा कणादप्रणीतशास्त्रस्यापि प्रामाण्यं स्यात्। तस्याप्रामाण्यं याभट्टसङ्गृहीतपराशरापुपपुराणे विस्तरेण प्रपञ्चितम्। अत एव माधवरामचन्द्राचार्यप्रणीतकालनिर्णयादेः प्रामाण्यम्। वाग्भट्टसङ्गृहीतवैद्यकस्यापि चरकाद्यविरोधात्प्रामाण्यम्। न तु स्मृतीनां ऋषिप्रणीतत्वे सति वेदाविरुद्धार्थकत्वेन प्रामाण्यमिति चेत्, न; लाघवेन वेदाविरुद्धार्थकत्वेन तत्प्रामाण्यस्योचितत्वात्॥

॥ इति श्रीरामाश्रमविरचिता दुर्जनमुखचपेटिका समाप्ता॥

---

इतोऽपि निवेदयतां सकृच्चक्षुः

परमपुरुषार्थरूपस्य निगमकल्पतरोः फलं श्रीभागवतस्य सरसरसा-

स्वादचतुरैः कथमास्वाद्यते ? प्रकारत्रयेणेतिः—

तत्र

(१) परमपुरुषार्थप्रतिपादिका—

## वृत्रासुरचतुःश्लोकी—

सा हि पण्डितपुरन्दराणां गोस्वामिश्रीपुरुषोत्तमानां प्रकाशेन समलङ्कृता—देवर्षिश्रीरमानाथ-
शास्त्रिकृतव्रजभाषया च समुपबृंहिता-चतुर्भिरेवाणकैर्लभ्यते ।

(२) भगवता कपिलेन मात्रे देवहूत्या उपदिष्टः साङ्ख्ययोगात्मकस्तृतीयस्कन्धः—
तदर्थश्च श्रीमदाचार्यचरणप्रोक्तेन निबन्धेन विना दुर्बोध एव अतः

## तृतीयस्कन्धार्थः—

भागवतार्थनिबन्धान्तर्गतः, आचार्यचरणाना प्रकाशेन कल्याणरायाणां टिप्पण्या च समेतः ।
अयं हि अष्टभिरेवाणकैः प्राप्यते ।

(३) श्रीमद्भागवतस्य प्रत्यध्यायतात्पर्यं, तस्य हि शास्त्रार्थविषयसप्तकेन च समन्वयः
कुत्र प्रदर्शितः ?

सच गोकुलरायभट्टकृते

निबन्धान्तर्गते—भागवताध्यायार्थ एव ।

सोऽपि नवभिराणकैः क्रेय ।

एतेषां च प्राप्तिस्थानं ज्ञायते नु भवता ?—

"शेठ नारायणदास तथा जेठानन्द आसनमल्ल चेरिटी ट्रस्ट ऑफिस,

२२६, कालबादेवीरोड, मुंबई २."